मेना च धारिणी चैव याभ्यां विश्वमिदं धृतम्। पितरस्ते निजे कन्ये धर्मार्थं प्रददुः शुभे
ते उभे ब्रह्मवादिन्यौ योगिन्यौ चैव ते उभे ॥
अग्निष्वात्तास्तु ये प्रोक्तास्तेषां मेना तु मानसी। धारणी मानसी चैव कन्या बर्हिषदां स्मृता ॥ २
मेरोस्तु धारणीं नाम पत्न्यर्थं व्यसृजच्छुभाम्। पितरस्ते बर्हिषदः स्मृता ये सोमपीथिनः ॥
[ते]ऽग्निष्वात्तास्तु तां मेनां पत्नीं हिमवते ददुः। स्मृतास्ते वै तु दौहित्रास्तद्दौहित्राश्निबोधत ॥ ३१
द[+]मेना हिमवतः पत्नी मैनाकं साऽन्वसूयत। गङ्गा सरिद्वरा चैव पत्नी या लवणोदधेः ॥
[मै]नाकस्यानुजः क्रौञ्चः क्रौञ्चद्वीपो यतः स्मृतः) ॥
[मे]रोस्तु धारणी पत्नी दिव्यौषधिसमन्वितम्। मन्दरं सुषुवे पुत्रं तिस्रः कन्याश्च विश्रुताः ॥ ३२ ३३
[वे]ला च नियतिश्चैव तृतीया चाऽऽयतिः पुनः। धातुश्चैवाऽऽयतिः पत्नी विधातुर्नियतिः स्मृता
[स्वा]यंभुवेऽन्तरे पूर्वं तयोर्वै कीर्तिताः प्रजाः। सुषुवे सागराद्वेला कन्यामेकामनिन्दिताम् ॥ ३४
[सवर्णा] [ना]म्ना च सामुद्री पत्नी प्राचीनबर्हिषः। सवर्णा साऽथ सामुद्री दश प्राचीनबर्हिषः ॥
सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥
तेषां स्वायंभुवो दक्षः पुत्रत्वे जज्ञिवान्प्रभुः। त्र्यम्बकस्याभिशापेन चाक्षुषस्यान्तरे मनोः ॥ ३६ ३७
एतच्छ्रुत्वा ततः सूतमपृच्छच्छांशपायनः। उत्पन्नः स कथं दक्षो ह्यभिशापाद्भवस्य तु ॥
चाक्षुषस्यान्वये पूर्वं तन्नः प्रब्रूहि पृच्छताम् ॥
इत्युक्तः कथयामास सूतो दक्षाश्रितां कथाम्। शांशपायनमामन्त्र्य त्र्यम्बकाच्छापकारणम् ३८
दक्षस्याऽऽसन्सुता ह्यष्टौ कन्या याः कीर्तिता मया। स्वेभ्यो गृहेभ्यो ह्यानाय्य ताः पिताऽभ्यर्चयद्गृ[हे]
[स]त्कृत्वा [र्चि]ताः सर्वा न्यवसंस्ताः पितुर्गृहे ॥
[ज्ये]ष्ठा [ता]सां [वरि]ष्ठा सती नाम पत्नी या त्र्यम्बकस्य वै। नाऽऽजुहावाऽऽत्मजां तां वै दक्षो रुद्रमभिद्विष ४
प्रसन्नो [ना]ति दक्षे न कदाचिन्महेश्वरः। जामाता श्वशुरे तस्मिन्स्वभावात्तेजसि स्थितः ॥ ४
[ततो] ... सती सर्वाः स्वसॄः प्राप्ताः पितुर्गृहम्। जगाम साऽप्यनाहूता सती तत्स्वं पितुर्गृह[म्]
[यव]ीयसीनां पिता चक्रे सत्याः पूजाप्रसंमताम् ॥
[ततो]ऽब्रवीत्तदा पितरं देवी क्रोधादमर्षिता। यवीयसीभ्यो ज्यायसीं किंतु पूजामिमां प्रभो ४२
[अ]स्मि [यवीय]सीभ्यो कृतवानसि गर्हिताम् ॥
दक्ष उवा[च] [ज्ये]ष्ठा हि [मे] त्वसत्कर्तुमर्हसि। एवमुक्तोऽब्रवीदेनां दक्षः संरक्तलोचनः ॥
[तेषां] [व]रिष्ठा च पूज्या बाला सदा मम। तासां ये चैव भर्तारस्ते मे बहुमताः सदा
...श्च महायोगाः सुधार्मिकाः। गुणैश्चैवाधिकाः श्लाघ्याः सर्वे ते त्र्यम्बकात्स ॥
[व]सिष्ठश्च अङ्गिराः पुलहः क्रतुः। भृगुर्मरीचिश्च तथा श्रेष्ठौ जामातरौ मम ॥
च ते शर्वो भक्ता चासि हितं सदा। तेन त्वां न बुभूषामि प्रतिकूलो हि
[द]क्षः संप्रमूढेन चेतसा। शापार्थमात्मनश्चैव ये चोक्ताः परमर्षयः ॥

---

+ धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके नास्ति। * इदमर्धं नास्ति क. पुस्तके।

१ क. °व विन... २ ख. °त्ता बर्हिषदस्ते°। ३ घ.ङ. °त्न्यर्थं व्यसृजच्छुभा°। ४ घ. ङ. °दुः। उपहृताः स्म... ५ ङ. °गतः... ६ घ. ङ. वेलाश्च नि°। ७ घ. ङ. °यत्नं°। ८ क. स्वस्रः प्रा°। ९ ख. ग. घ. ङ. अस... ग. घ. ङ. न त्वं स°। १२ ङ. ज्येष्ठा।

तथोक्ता पितरं सा वै क्रुद्धा देवीदमब्रवीत् । वाङ्मनःकर्मभिर्यस्माददुष्टां मां विगर्हसे ॥
तस्मात्त्यजाम्यहं देहमिदं तात तवाऽऽत्मजम् ॥ ५१

ततस्तेनावमानेन सती दुःखादमर्षिता । अब्रवीद्वचनं देवी नमस्कृत्वा(त्य) महेश्वरम् ॥ ५२

यत्राहमुपपत्स्येऽहं पुनर्देहेन भास्वता । तत्राप्यहमसंमूढा संभूता धार्मिकी पुनः ॥
गच्छेयं धर्मपत्नीत्वं त्र्यम्बकस्यैव धर्मतः ॥ ५...

तत्रैवाथ समासीना युक्ताऽऽत्मानं समादधे । धारयामास चाऽऽग्नेयीं धारणां मनसाऽऽत्मनः ॥
तत आग्नेयीसमुत्थेन वायुना समुदीरितः । सर्वाङ्गेभ्यो विनिःसृत्य वह्निर्भस्म चकार ताम् ॥
तदुपश्रुत्य निधनं सत्या देवोऽथ शूलभृत् । संवादं च तयोर्बुद्ध्वा याथातथ्येन शंकरः ॥
दक्षस्याथ ऋषीणां च चुकोप भगवान्प्रभुः ॥ ५...

यस्मादवमता दक्ष मत्कृते नाम सा सती । प्रशस्ताश्चेतराः सर्वाः स्वसुता भर्तृभिः सह ॥ ५...
तस्माद्वैवस्वतं प्राप्य पुनरेवं महर्षयः । उत्पत्स्यन्ते द्वितीये वै मम यज्ञे ह्ययोनिजाः ॥ ५...
हुते वै ब्रह्मणा शुक्रे चाक्षुषस्यान्तरे मनोः । अभिव्याहृत्य च ऋषीन्दक्षमभ्यगमत्पुनः ॥ ५९
भविता चाक्षुषो राजा चाक्षुषस्य समन्वये । प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ॥ ६०
दक्ष इत्येव नाम्ना त्वं मारिषायां जनयिष्यसि । कन्यायां शाखिनां चैव प्राप्ते वै चाक्षुषेऽन्तरे ॥

दक्ष उवाच—

जज्ञेऽहं तत्रापि ते विघ्नमाचरिष्यामि दुर्मते । धर्मार्थकामयुक्तेषु कर्मस्विह पुनः पुनः ॥ ६२
तस्मात्त्वं मत्कृते क्रूरमृषीन्व्याहृतवानसि । तस्मात्सार्धं सुरैर्यज्ञे न त्वां यक्ष्यन्ति वै द्विजाः ॥
कृत्वाऽऽहुतिं ततः क्रूर अपस्तयक्ष्यन्ति कर्मसु । इहैव वत्स्यसि तथा दिवं हित्वाऽऽयुगक्षयात् ॥

रुद्र उवाच—

सर्वेषामेव लोकानां भूर्लोकस्त्वादिरुच्यते । तमहं धारयिष्यामि निदेशात्परमेष्ठिनः
तस्यां क्षितौ धृता लोकाः सर्वे तिष्ठन्ति भास्कराः । तानहं धारयामीह सततं न त... २
चातुर्वर्ण्यं हि देवानां ते चाप्येकत्र भुञ्जते । नाहं तैः सह भोक्ष्यामि ततो दास्यन्ति... २
...तो देवैः स तैः सार्धं नेज्यते पृथगिज्यते ॥

...ऽभिव्याहृतो दक्षो रुद्रेणामिततेजसा । स्वायंभुवेऽन्तरे त्यक्त्वा उत्पन्नो मानुष...
...त्वा गृहपतिं दक्षं ज्ञानानामीश्वरं प्रभुम् । दक्षो नाम महायज्ञैः सोऽयजद्दैवतैः...
... देवी सती या तु प्राप्ते वैवस्वतेऽन्तरे । मेनायां तामुमां देवीं जनयामास शै...
...तु देवी सती पूर्वं ततः पश्चादुमाऽभवत् । सहव्रता भवस्यैषा न तया मुच्यते...
...दिच्छति संस्थातुं प्रभुर्मन्वन्तरेष्विह ॥

...कश्यपं देवी यथाऽदितिरनुव्रता । साध्यं नारायणं श्रीस्तु मघवन्तं श...
...कीर्तिः रुचिः सूर्यं वसिष्ठं चाप्यरुन्धती । नैतास्तु विजहत्येतान्भर्तॄन्देव्य...
...र्तमानकल्पेषु पुनर्जायन्ते तैः सह ॥

१ ग. घ. ङ. °पद्येयं पु° । २ ख. घ. संमूढा । ३ क. °लधृक् । सं° । ४ ख. ग. ङ. ... ५ घ. ङ. शुक्रे । ६ ख. ङ. भास्वराः । ७ ख. °म् । नमस्ते हयमेधेन सोऽ° । घ. ङ. °म् । ...

एवं प्राचेतसो दक्षो जज्ञे वै चाक्षुषेऽन्तरे । प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ॥ ७
दशभ्यस्तु प्रचेतोभ्यो मार्षायां च पुनर्नृपः । जज्ञे रुद्राभिशापेन द्वितीयमिति नः श्रुतम् ॥ ७
भृग्वादयस्तु ते सर्वे जज्ञिरे वै महर्षयः । आद्ये त्रेतायुगे पूर्वं मनोर्वैवस्वतस्य ह ॥
देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम् ॥ ७६
...ति सानुशयो ह्यासीत्तयोर्जात्यन्तरागतः । प्रजापतेस्तु दक्षस्य त्र्यम्बकस्य च धीमतः ॥ ७७
...स्मान्नानुशयः कार्यो वैरिष्विह कदाचन । जात्यन्तरगतस्यापि भावितस्य शुभाशुभैः ॥
...न्तुं न मुञ्चति ख्यातिस्तन्न कार्यं विजानता ॥ ७८

ऋषय ऊचुः—

...चेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे । विनाशमगमत्सूत हयमेधः प्रजापतेः ॥ ७९
...व्यां मृत्युं कृतं मत्वा क्रुद्धं सर्वात्मकं प्रभुम् । कथं प्रासादयद्दक्षः स यज्ञः साधितः कथम् ॥
...तद्वेदितुमिच्छामस्तन्नो ब्रूहि यथातथम् ॥ ८०

*सूत उवाच—

पुरा मेरोर्द्विजश्रेष्ठाः शृङ्गं त्रैलोक्यविश्रुतम् । ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम् ॥ ८१
अप्रमेयमनाधृष्यं सर्वलोकनमस्कृतम् । तस्मिन्देवो गिरिश्रेष्ठे सर्वधातुविभूषिते ॥
पर्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ॥ ८२
शैलराजसुता चास्य नित्यं पार्श्वस्थिताऽभवत् । आदित्याश्च महात्मानो वसवश्चामितौजसः ॥ ८३
तथैव च महात्मानावश्विनौ भिषजां वरौ । तथा वैश्रवणो राजा गुह्यकैः परिवारितः ॥ ८
यक्षे...श्वरः श्रीमान्कैलासनिलयः प्रभुः । उपासते महात्मानमुशना च महामुनिः ॥
...प्रमुखास्ते चैव परमर्षयः ॥ ८
...वाश्चैव तथा देवर्षयोऽपरे । विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ ॥ ८
...संघाश्च समाजग्मुरनेकशः । ववौ शिवः सुखो वायुर्नानागन्धवहः शुचिः ॥ ८
...पेताः पुष्पवन्तो द्रुमास्तथा । तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ॥ ८
...र्तिं पर्युपासन्ति तत्र वै । भूतानि च तथाऽन्यानि नानारूपधराण्यथ ॥ ८
...रौद्राः पिशाचाश्च महाबलाः । बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ॥ ९
...स्तत्र तस्थुर्वैश्वानरोपमाः । नन्दीश्वरश्च भगवान्देवस्यानुमते स्थितः ॥
...शूलं दीप्यमानं स्वतेजसा । गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा ॥
...वरूपिणी द्विजसत्तमाः ॥
...तत्र दीप्यमानः सुरर्षिभिः । देवैश्च सुमहाभागैर्महादेवो व्यवस्थितः ॥
...ष्ठि दक्षो वै यज्ञमारभत् । गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ॥

* इदं नास्ति ख. घ. ङ. पुस्तकेषु ।

...थज्ञे । २ ख.ग.घ.ङ. °नृप । ज° । ३ क. °तीर्येऽस्मिन्नतिश्रुतः । स° । ४ क.ग. °स्तत्र का° । ... °व्यां मन्युं कृ° । ६ ख. घ. °थं प्रसा° । ७ ख. ग. घ. ङ. तत्र देवो । ८ ग. ङ. ... । १० घ. ङ. देवं रू° । ११ ख. घ. ङ. °त्र पूज्यमा° ।

तस्तस्य मखे देवाः शतक्रतुपुरोगमाः । गमनाय समागम्य बुद्धिमापेदिरे तदा ॥ ९५
र्विमानैर्महात्मानो ज्वलद्भिर्ज्वलनप्रभाः । देवस्यानुमतेऽगच्छन्गङ्गाद्वार इति श्रुतिः ॥ ९६
न्धर्वाप्सरसाकीर्णं नानाद्रुमलतावृतम् । ऋषिसंघैः परिवृतं दक्षं धर्मभृतां वरम् ॥ ९७
थिव्यामन्तरिक्षे वा ये च स्वर्लोकवासिनः । सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ॥
आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः । जिष्णुना सहिताः सर्वे आगता यज्ञभागिनः ॥
ष्मपाः सोमपाश्चैव आज्यपा धूमपास्तथा । अश्विनौ पितरश्चैव आगता ब्रह्मणा सह ॥ १०
ते चान्ये च बहवो भूतग्रामास्तथैव च । जरायुजाण्डजाश्चैव स्वेदजोद्भिज्जकास्तथा ॥ १०
आहूता मन्त्रतः सर्वे देवाश्च सह पत्निभिः+ । विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ॥
न्दृष्ट्वा मन्युमाविष्टो दधीचो वाक्यमब्रवीत् । अपूज्यपूजने चैव पूज्यानां चाप्यपूजने ॥
रः पापमवाप्नोति महद्वै नात्र संशयः ॥ १०
एवमुक्त्वा तु विप्रर्षिः पुनर्दक्षमभाषत । पूज्यं तु पशुभर्तारं कस्मान्नाऽऽह्वयसे प्रभुम् ॥ १०

दक्ष उवाच—

सन्ति मे बहवो रुद्राः शूलहस्ताः कपर्दिनः । एकादशावस्थगता नान्यं वेद्मि महेश्वरम् ॥ १०५

दधीच उवाच—

सर्वेषामेकमन्त्रोऽयं येनेशो न निमन्त्रितः । यथाऽहं शंकरादूर्ध्वं नान्यत्पश्यामि दैवतम् ॥
थो दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ॥ १०६

दक्ष उवाच—

एतन्मखेशाय सुवर्णपात्रे हविः समस्तं विधिमन्त्रपूतम् ।
विष्णोर्नयाम्यप्रतिमस्य सर्वं प्रभोर्विभोर्ह्याहवनीयनित्यम् ॥ १०७

सर्वास्तु देवता ज्ञात्वा शैलराजसुता तदा । उवाच वचनं साध्वी देवं पशुपतिं तदा ॥

उमोवाच—

गवन्क्व गता ह्येते देवाः शक्रपुरोगमाः । ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानय

महेश्वर उवाच—

क्षो नाम महाभागे प्रजानां पतिरुत्तमः । हयमेधेन यजते तत्र यान्ति दिवौकसः ॥

देव्युवाच—

मेतं महाभाग किमर्थं न गतोऽसि वै । केन वा प्रतिषेधेन गमनं प्रतिषिध्यते ॥

महेश्वर उवाच—

व महाभागे सर्वमेतदनुष्ठितम् । यज्ञेषु मम सर्वेषु न भाग उपकल्पितः ॥
पपन्नेन मार्गेण वरवर्णिनि । न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्म

+ आर्षः प्रयोगः ।

१ ग. झ. ङ. मखं । २ ख. ग. घ. ङ. °दा । तैर्वि° । ३ घ. ङ. च । ४ ग. विष्णुना । ५ । ८ ख । द्भिजैः । आ° । घ. °व सह सद्वेदजोद्भिजैः । आ° । ६ ख. घ. ङ. °न्नार्चय° । ७ ख. °र्धीः. घ. ङ । देवा येन ईशो नि° । ९ ख. घ यथा । १० क. °खे शूर सु° । ११ क. °विभो ह्या° । ङ. °मे । १३ क. ग. °भागोप्र° । १४ ख. ग. घ. ङ. °भेनं म° । १५ ख. घ. ङ. धर्मतः ।

देव्युवाच—

भगवन्सर्वदेवेषु प्रभावोऽभ्यधिको गुणैः । अजेयश्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ ११
अनेन तु महाभाग प्रतिषेधेन भागतः । अतीव दुःखमापन्ना वेपथुश्च ममानघ ॥ ११

किं नाम दानं नियमं तपो वा कुर्यामहं येन पतिर्ममाद्य ।
लभेत भागं भगवानचिन्त्यो यज्ञस्य चार्धमथ वा तृतीयम् ॥ ११६ ॥
एवं ब्रुवाणां भगवानचिन्त्यः पत्नीं प्रहृष्टः क्षुभितामुवाच ।
न वेत्सि देवेशि कृशोदराङ्गि किं नाम युक्तं वचनं तवेदम् ॥ ११७ ॥
अहं हि जानामि विशालनेत्रे ध्यानेन सर्वे हि वदन्ति सन्तः ।
तवाद्य मोहेन महेन्द्रदेवो लोकत्रयं सर्वथा संप्रमूढम् ॥ ११८ ॥
मामध्वरे शंसितारः स्तुवन्ति रथंतरे(रं) साम गायन्ति गेयम् ।
मा ब्राह्मणा ब्रह्मसत्रे यजन्ते ममाध्वर्यवः कल्पयन्ते च भागम् ॥ ११९

देव्युवाच—

सुप्राकृतोऽपि भगवान्सर्वस्त्रीजनसंसदि । स्तौति गोपायते वाऽपि स्वमात्मानं न संशयः ॥ १२०

भगवानुवाच—

नाऽऽत्मानं स्तौमि देवेशि पश्य त्वमुपगच्छ च । यं स्रक्ष्यामि वरारोहे भागार्थं वरवर्णिनि
एवमुक्त्वा तु भगवान्पत्नीं प्राणैरपि प्रियाम् । सोऽसृजद्भगवान्वक्त्राद्भूतं क्रोधाग्निसंनिभम्
सहस्रशीर्षं देवं च सहस्रचरणेक्षणम् । सहस्रमुद्गरधरं सहस्रशरपाणिनम् ॥
दापाणिं दीप्तकार्मुकधारिणम् । परश्वसिधरं देवं महारौद्रं भयावहम् ॥
दीप्यन्तं चन्द्रार्धकृतभूषणम् । वसानं चर्म वैयाघ्रं महारुधिरनिस्रवम् ॥
विभ्रान्तं महावक्त्रं महोदरम् । विद्युज्जिह्वं प्रलम्बोष्ठं लम्बकर्णं दुरासदम् ॥
तितकरं भाभिर्ज्वलितमूर्धजम् । ज्वालामालापरिक्षिप्तं मुक्तादामविभूषितम् ॥
दीप्यन्तं युगान्तमिव पावकम् । आकर्णदारितास्यान्तं चतुर्दंष्ट्रं भयानकम् ॥
तेजं महापुरुषमीश्वरम् । विश्वहर्तृमहाकायं महान्यग्रोधमण्डलम् ॥
वदीप्यन्तं मन्मथाग्निवत् ॥

चतुर्महास्यं सिततीक्ष्णदंष्ट्रं महोग्रतेजोबलपौरुषाढ्यम् ॥
युगान्तसूर्याग्निसहस्रभासं सहस्रचन्द्रामलकान्तिकान्तम् ॥
प्रदीप्तसर्वौषधिमन्दराभं सुमेरुकैलासहिमाद्रितुल्यम् ॥ १३०

वीर्यं चारुनासं महाननम् । प्रचण्डगण्डं दीप्ताक्षमग्निज्वालाविलाननम् ॥
नं महाभुजगवेष्टितम् । उष्णीषिणं चन्द्रधरं क्वचिदुग्रं क्वचित्समम् ॥
निं नानागन्धानुलेपनम् । नानारत्नविचित्राङ्गं नानाभरणभूषितम् ॥

---

घ. 'मयं यज्ञे दीप्ते रानाधि' । घ. 'वादावि । २ क. नामतः । ३ ग. घ. ङ. तदेवम् । ४ क. 'न्तः । न वा' पातिः । च° । १२ घ. °मू । प्रमाध्व' । ७ ग. ङ. °म् । अब्राह्मणे ब्र° । ख. °म् । आब्राह्मणे ब्र° । घ. °म् । आ
क. यज्जग्धं । १७ घ.' । ९ क. °च । अप्रा' । १० ग. घ. ङ. गोपयते । ११ ख. घ. 'रालवि' । १२
ख. घ. °मुखम् । स° । क. °तु दक्ष भ° । १४ ख. ग. घ. ङ. 'ष्यते म° । १५ क. °क्ष्णदंष्ट्रं म° । १६ क. °ठकौ

र्णिकारस्रजं दीप्तं क्रोधादुद्भ्रान्तलोचनम् । क्वचिन्नृत्यति चित्राङ्गं क्वचिद्ददाति सुस्वरम् ॥ १३४
क्वचिद्ध्यायति युक्तात्मा क्वचित्स्थूलं प्रमार्जति । क्वचिद्गायति विश्वात्मा क्वचिद्रौति मुहुर्मुहुः ॥
नं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः । प्रभुत्वमात्मसंबोधो ह्यधिष्ठानगुणैर्युतः ॥ १३६
नुभ्यामवनिं गत्वा प्रणतः प्राञ्जलिः स्थितः । आज्ञापय त्वं देवेश किं कार्यं करवाणि ते
मुवाचाऽऽक्षिप मखं दक्षस्येह महेश्वरः । देवस्यानुमतिं श्रुत्वा वीरभद्रो महाबलः ॥ १३८
णम्य शिरसा पादौ देवेशस्य उमापतेः ॥ १३९
तो बन्धात्प्रमुक्तेन सिंहेनेवेह लीलया । देव्या मन्युकृतं मत्वा हतो दक्षस्य स क्रतुः ॥ १३९
न्युना च महाभीमां भद्रकाली महेश्वरी । आत्मनः सर्वसाक्षित्वे तेन सार्धं सहानुगा ॥ १४०
र एष भगवान्क्रुद्धः प्रेतावासकृतालयः । वीरभद्र इति ख्यातो देव्या मन्युप्रमार्जकः ॥ १४१
एषोऽसृजद्रोमकूपेभ्यो रौद्रान्नाम गणेश्वरान् । रुद्रानुगा महावीर्या रुद्रवीर्यपराक्रमाः ॥ १४२
रुद्रस्यानुचराः सर्वे सर्वे रुद्रसमप्रभाः । ते निपेतुस्ततस्तूर्णं शतशोऽथ सहस्रशः ॥ १४३
ततः किलाकिलाशब्द आकाशं पूरयन्निव । तेन शब्देन महता त्रस्ताः सर्वे दिवौकसः ॥ १४४
पर्वताश्च व्यशीर्यन्त कम्पते च वसुंधरा । मेरुश्च घूर्णते विप्राः क्षुभ्यन्ते वरुणालयाः ॥ १४५
अग्नयो नैव दीप्यन्ते न च दीप्यति भास्करः । ग्रहा नैव प्रकाशन्ते नक्षत्राणि न तारकाः ॥
ऋषयो नाभ्यभाषन्त न देवा न च दानवाः । एवं हि तिमिरीभूते निर्दहन्ति विमानिताः ॥
सिंहनादं प्रमुञ्चन्ते घोररूपा महाबलाः । प्रभञ्जन्ते परे घोरा यूपानुत्पाटयन्ति च ॥ १४८
र्दन्ति तथा चान्ये विनृत्यन्ति तथाऽपरे । आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः ॥
र्यन्ते यज्ञपात्राणि यागस्याऽऽयतनानि च । शीर्यमाणानि दृश्यन्ते तारा इव नभस्तलात् ॥
व्यान्नपानभक्षाणां राशयः पर्वतोपमाः । क्षीरनद्यस्तथा चान्या घृतपायसकर्दमाः १५४
मुमण्डोदका दिव्याः खण्डशर्करवालुकाः ॥
गवहूसान्निवहन्त्यन्या गुडकुल्या मनोरमाः । उच्चावचानि मांसानि भक्ष्याणि विविधा[illegible]
नकानि च दिव्यानि लेह्यं चोष्यं तथाऽपरे । भुञ्जते विविधैर्वक्त्रैर्विलुण्ठन्ति ( * [illegible]
कोपान्महाकायाः कालाग्निसदृशोपमाः । सुरसैन्यानि मर्दन्तो भीषयन्ति ) च [illegible]
हन्ति विविधाकाराश्चिक्षिपुः सुरयोषितः ॥
मेतं गोपप्रयुक्तास्तु सर्वदेवैः सुरक्षितम् । तं यज्ञमहनञ्शीघ्रं रुद्रकल्पाः समीपतः ॥
मन्ये तथा नादान्सर्वभूतभयंकरान् । छित्त्वा शिरोऽन्ये यज्ञस्य विनदन्ति भयं[illegible]
च दक्षपतिश्चैव देवो यज्ञपतिस्तथा । मृगरूपेण चाऽऽकाशे प्रपलायितुमारभत् ।
भद्रोऽप्रमेयात्मा ज्ञात्वा तस्य बलं तदा । अन्तरिक्षगतस्याऽऽशु चिच्छेदास्य

* धनुश्छिद्रान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

१ ख. ग. ङ. दिव्यं । २ ख. ग- ङ- °स्वनम् । ३ ख. ग. घ. ङ. °धो अधिष्ठानैर्गु° । ४ ख. ... ६ ख- घ, °मा रुद्र° । ७ क. °भूतं नि° । ८ क. चूर्णन्ते । ९ ग. घ- ङ. याज्या ... ११ क. च । यानि का° । १२ ख. घ. ङ. लेह्यचोष्याण्यथा° । १३ ख. घ. ङ. विलुम्° ... १५ ख. ग. घ. ङ. °राः । यज्ञो यज्ञपतिश्चै° । १६ ख. घ. महत् ।

दक्षः प्रजापतिश्चैवं[1] नष्टः संभ्रान्तचेतनः[2] । क्रुद्धेन वीरभद्रेण शिरः पादेन पीडितम् ॥
जराभिभूततीव्रात्मा निपपात महीतले ॥
त्रयस्त्रिंशद्देवतानां ताः कोट्यो विमलात्मिकाः । पाशेनाग्निबलेनाऽऽशु बद्धाः सिंहबलेन च
ततो[3] जग्मुर्महात्मानं सर्वे देवा महाबलम् । प्रसीद भगवन्रुद्र भृत्यानां मा क्रुधः प्रभो ॥
ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः । ऊचुः प्राञ्जलयो भूत्वा कथ्यतां को भवानिति

वीरभद्र उवाच—

न च देवो न चाऽऽदित्यो न च भोक्तुमिहाऽऽगतः । नैव द्रष्टुं हि देवेन्द्रान्न च कौतूहलान्वित
दक्षयज्ञविनाशार्थं संप्राप्तं विद्धि मामिह । वीरभद्रं इति ख्यातं रुद्रकोपाद्विनिर्गतम् ॥ १
भद्रकाली च विज्ञेया देव्याः क्रोधाद्विनिर्गता । प्रेषिता देवदेवेन यज्ञान्तिकमिहाऽऽगता ॥
शरणं गच्छ राजेन्द्र देवं तं त्वमुमापतिम् । वरं क्रोधोऽपि रुद्रस्य वरदानं न दैवतः[6] ॥ १६६
वीरभद्रवचः श्रुत्वा दक्षो धर्मभृतां वरः । तोषयामास देवेशं शूलपाणिं महेश्वरम् ॥ १६७
प्रदुष्टे यज्ञवाटे तु विद्रुतेषु द्विजातिषु । तारामृगमये[7] दीप्ते रौद्रे भीममहानले ॥ १६८
शूलनिर्भिन्नवदनैः कूजद्भिः परिचारकैः । निखातोत्पाटितैर्यूपैरपविद्धैर्यतस्ततः ॥ १६९
उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृध्नुभिः । पक्षपातविनिर्धूतैः शिवाशतनिनादितैः ॥ १७०
प्राणापानौ संनिरुध्य ततः स्थानेन यत्नतः । विचार्य सर्वतो दृष्टिं बहुदृष्टिरमित्राजित् ॥ १७१
सहसा देवदेवेशस्त्वग्निकुण्डादुपागतः[11][12] । चण्डसूर्यसहस्रस्य[13] तेजः संवर्तकोपमम् ॥ १७२
हस्य चैनं भगवानिदं वचनमब्रवीत् । नष्टस्तेऽज्ञानतो दक्ष प्रीतिस्ते मयि सांप्रतम् ॥ १७३
कृत्वाऽब्रवीद्वाक्यं ब्रूहि किं करवाणि ते । श्रावितं[14] च समाख्याय देवानां गुरुभिः सह ॥
चाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः । भीतशङ्कितवित्रस्तः[15] सबाष्पवदनेक्षणः ॥ १७५
प्रसन्नो भगवान्यदि वाऽहं तव प्रियः । यदि वाऽहमनुग्राह्यो यदि देयो वरो मम ॥ १७६
धं भक्षितं पीतमशितं यच्च नाशितम् । चूर्णीकृतं[17] चापविद्धं[18] यज्ञसंभारमीदृशम् ॥ १७७
कालेन महता प्रयत्नेन च संचितम् । तन्न मिथ्या भवेन्मह्यं वरमेतं वृणोम्यहम् ॥ १७८
ऽस्त्वित्याह भगवान्भगनेत्रहरो हरः । धर्माध्यक्षं महादेवं त्र्यक्षं तं वै प्रजापतिः ॥ १७९
प्यामवानि गत्वा दक्षो लब्ध्वा भवाद्वरम् । नाम्नामष्टसहस्रेण स्तुतवान्वृषभध्वजम् ॥ १८०

दक्ष उवाच—

ो देवदेवेश देवारिबलसूदन । देवेन्द्र ह्यमरश्रेष्ठ[19] देवदानवपूजित ॥
ाक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय । सर्वतःपाणिपादस्त्वं[20] सर्वतोक्षिशिरोमुखः[21] ॥ १८
तःश्रुतिमाँल्लोके[22] सर्वानावृत्य[23] तिष्ठसि ॥ १८

---

१ क. °व विनष्टो भ्रा° । २ ख. ग. घ. ङ. °तसः । क्रु° । ३ ख. ग. ङ. तत ऊचुर्म° । ४ ख. ग. घ. नि... ...ाति । ५ ङ. °गतः । श° । ६ ख. ग. घ. ङ. °वतैः । वी° । ७ ख. ग. घ. ङ. प्रदीप्ते । ८ ख. ग. °मयं दीप्ते ... घ. °मयं यज्ञे दीप्ते रौद्रे महाध्वरे । शू° । ९ ङ. °ये यज्ञे दीप्ते रौद्रे म° । १० ख. घ. °ध्य वज्रस्था° । ११ ख. ... ...पतिः । च° । १२ घ. °तः । चित्रसू° । १३ क. चन्द्रसू° । १४ ख. ग. घ. ङ. °विते च । १५ ख. भीतः श... ...क. यज्जगर्ध । १७ घ. चूर्णितं चा° । १८ घ. °द्धं च य° । १९ ख. घ. ङ. °रज्येष्ठ । २० ङ. °पादास्त्व... ...ख. घ. °मुखम् , स° । २२ घ. °तिगल्लो° । २३ ख. घ. सर्वमावृत्य तिष्ठति । श° ।

तकर्ण महाकर्ण कुम्भकर्णार्णवालय । गजेन्द्रकर्ण गोकर्ण पाणिकर्ण[2] नमोऽस्तु ते ॥ १८३
र शतावर्त शतजिह्व शतानन[3] । गायन्ति त्वां गायत्रिणो ह्यर्चयन्ति तथाऽर्चिनः १८४
नवगोप्ता च ब्रह्मा च त्वं शतक्रतुः । मूर्तीश त्वं महामूर्ते समुद्राम्बुधराय च ॥ १८५
य, ह्यस्मिन्देवतास्ते गावो गोष्ठ इवाऽऽसते शरीरं ते प्रपश्यामि सोममग्निं जलेश्वरम् १८६
दित्यमथ विष्णुं च ब्रह्माणं सबृहस्पतिम् । क्रिया कार्यं[4] कारणं चं कर्ता करणमेव च॥१८७
च सदसच्चैव तथैव प्रभवाव्ययम् । नमो भवाय शर्वाय रुद्राय वरदाय च ॥ १८८
ां पतये चैव नमस्त्वन्धकघातिने । त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे ॥ १८९
त्र्यक्षाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः । नमश्चण्डाय मुण्डाय[6] प्रचण्डाय धराय च ॥ १९०
दण्डिमासक्तकर्णाय दण्डिमुण्डाय वै नमः । नमोऽर्धदण्डकेशाय निष्काय विकृताय च ॥ १९१
विलोहिताय धूम्राय नीलग्रीवाय ते नमः । नमस्त्वप्रतिरूपाय शिवाय च नमोऽस्तु ते ॥ १९२
सूर्याय सूर्यपतये सूर्यध्वजपताकिने । नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ॥ १९३
नमो हिरण्यगर्भाय हिरण्यकवचाय च । हिरण्यकृतचूडाय हिरण्यपतये नमः ॥ १९४
शत्रुघाताय दण्डाय वर्णपानपुटाय च । नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः[11] ॥ १९५
सर्वायाभक्ष्यभक्ष्याय सर्वभूतान्तरात्मने । नमो होत्राय मन्त्राय शुक्लध्वजपताकिने ॥ १९६
नमो नमाय नम्याय नमः किलिकिलाय[12] च । नमस्ते शयमानाय शयितायोत्थिताय च ॥ १९७
स्थिताय चलमानाय मुण्डाय[13] कुटिलाय च । नमो नर्तनशीलाय मुखवादित्रकारिणे ॥ १९८
नाट्योपहारलुब्धाय गीतवाद्यरताय च । नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ॥ १९९
कलनाय च कल्पाय क्षयायोपक्षयाय च । भीमदुन्दुभिहासाय भीमसेनप्रियाय च ॥ २००
उग्राय च नमो नित्यं नमस्ते दशबाहवे । नमः कपालहस्ताय चिताभस्मप्रियाय च ॥ २०१
विभीषणाय भीष्माय भीष्मव्रतधराय च । नमो विकृतवक्त्राय खड्गजिह्वाग्रदंष्ट्रिणे ॥ २०२
पक्वाममांसलुब्धाय तुम्बवीणाप्रियाय च । नमो वृषाय[14] वृष्याय वृष्णये वृषणाय च ॥ २०३
कटंकटाय चण्डाय नमः[15] सावयवाय च । नमस्ते[16] वरकृष्णाय वराय वरदाय च ॥ २०४
वरगन्धमाल्यवस्त्राय वरातिवरये नमः । नमो वर्षाय वाताय छायायै आतपाय च ॥ २०५
नमो रक्तविरक्ताय शोभनायाक्षमालिने । संभिन्नाय विभिन्नाय विविक्तविकटाय च ॥ २०६
घोररूपरूपाय घोरघोरतराय च । नमः शिवाय शान्ताय नमः शान्ततराय च ॥ २०७
एकपाद्बहुनेत्राय एकशीर्ष[18] नमोऽस्तु ते । नमो वृद्धाय लुब्धाय संविभागप्रियाय च ॥ २०८
अक्षमालार्चिताङ्गाय नमः[19] पाशुपताय च । नमश्चण्डाय घण्टाय घण्टया[22] जग्धरन्ध्रिणे ॥ २०९
सहस्रशतघण्टाय घण्टामालाप्रियाय च । प्राणदण्डाय त्यागाय नमो हिलिहिलाय च[23] ॥ २१०

१ ख. ग. ङ. °नतः । गा° । २ ख. घ. ङ. °णो अर्चन्त्यर्कं तथाऽर्किणः । दे° । ३ ख. ग. घ. ङ. °रं तव घ. °र्थं च करणं कर्ता कार° । ५ ख. च तथैव क्रियमाणकम् । अ° । ६ घ. ङ °य मुण्डायाण्डघ° । ख. °य मुण्डंचाय ... °सक्तिवर्णाय मुण्डि° । ८ ख. ग. ङ. शुष्काय । ९ ख. ङ. वै । १० ख. ग. घ. ङ. °य विरूपाय शिवाय च । ... ख. ङ. °मः । शर्वा° । १२ ग. किल्बिकि° । घ. किलकि° । १३ ख. घ. ङ. मुण्डाय । १४ ङ. वृषभ वृष्ण्याय ... । १५ ख. ग. घ. °मः पचपचाय । ङ. मः °पद्पदाय । १६ ख. ग. ङ. °स्ते अज कृ° । १७ ख. घ. घ. ङ. °रघो° ... । ख. °मो नमः । न° । १९ ख. घ. ङ. °मः शाशश्चाय । २० क. °ग्धरन्ध्रि° । २१ घ. ङ. °न्ध्रिने । स° । २ ... हिलिहिलाय । २३ क. च । हूं हूं का° ।

हुंहुंकाराय पाराय हुंहुंकारप्रियाय च । नमश्च शम्भवे नित्यं गिरिवृक्षकलाय च ॥
गर्भमांसशृगालाय तारकाय तराय च । नमो यज्ञाधिपतये द्रुताँयोपद्रुताय च ॥
यज्ञवाहाय दाँनाय तप्याय तपनाय च । नमस्तटाय भव्याय तडितां पतये नमः ॥
अन्नदायान्नपतये नमोऽस्त्वन्नभवाय च । नमः सहस्रशीर्षाय सहस्रचरणाय च ॥
सहस्रोद्यतशूलाय सहस्रनयनाय च । नमोऽस्तु बालरूपाय बालरूपधराय च ॥
बालानां चैव गोप्त्रे च बालक्रीडनकाय च । नमः शुद्धाय बुद्धाय क्षोभणायाक्षताय च ॥
तरङ्गाङ्कितकेशाय मुक्तकेशाय वै नमः । नमः षट्कर्मनिष्ठाय त्रिकर्मनिरताय च ॥
वर्णाश्रमाणां विधिवत्पृथक्कर्मप्रवर्तिने । नमो घोषाय घोष्याय नमः कलकलाय च ॥ २
*श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च । धर्मार्थकाममोक्षाय क्रथाय क्रथनाय च ] ॥ २१९
सांख्याय सांख्यमुख्याय योगाधिपतये नमः । नमो रथ्यविरथ्याय चतुष्पथरताय च । १२०
कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने । ईशान वज्रसंहाय हरिकेश नमोऽस्तु ते ॥
त्र्यम्बकाम्बिकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ॥
काम कामद कामघ्न धृप्तोदृप्त निषूदनः । सर्व सर्वद सर्वज्ञ संध्याराग नमोऽस्तु ते ॥ २२१
महाबल महाबाहो महासत्त्व महाद्युते । महामेघचरप्रेक्ष महाकाल नमोऽस्तु ते ॥ २२२
स्थूलजीर्णाङ्गजटिने वल्कलाजिनधारिणे । दीप्तसूर्याग्निजटिने वल्कलाजिनवाससे ॥ २२३
सहस्रसूर्यप्रतिम तपोनित्य नमोऽस्तु ते ॥
उन्मादन शतावर्त गङ्गातोयार्द्र मूर्धज । चन्द्रावर्त युगावर्त मेघावर्त नमोऽस्तु ते ॥ २२४
त्वमन्नकर्ता च अन्नदश्च त्वमेव हि । अन्नस्रष्टा च पक्ता च पक्वभुक्पचे नमः ॥ २२५
जरायुजोऽण्डजश्चैव स्वेदजोद्भिज्ज एव च । त्वमेव देवदेवेशो भूतग्रामश्चतुर्विधः ॥ २२६
स्रष्टा चराचरस्य ब्रह्मा त्वं प्रतिहर्ता त्वमेव च । त्वमेव ब्रह्मविदुषामपि ब्रह्मविदां वरः ॥ २२७
सत्त्वस्य परमा योनिरब्वायुर्ज्योतिषां निधिः । ऋक्सामानि तथोंकारमाहुस्त्वां ब्रह्मवादिनः ॥ २२८
हायी हवो हावी हुवां वाचाऽऽहुतिः सदा । गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥
यजुर्मयो ऋङ्मयश्च सामाथर्वमयस्तथा । पठ्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदां गणैः ॥ २३१
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये । त्वामेव मेघसंघाश्च विश्वस्तनितगर्जितम् ॥ २३

* धनुश्चिह्नान्तर्गतग्रन्थः ख. घ. पुस्तकयोर्नास्ति । + इदमर्धं नास्ति ख. पुस्तके ।

१ क. य हूं हूं का°। २ ख. ग. घ. नमः सशपचे नि° ङ. नम । शसपचे नि°। ३ ख. घ. ङ. °ताय प्रद्रुता... °न्ताय। ५ ख. घ. ङ. य तंद्याय । ६ ख. ग घ. अन्नादा°। ७ ख. ग घ. ङ. नमस्त्वन्नभुजाय । ८ ख. ग... °योवाऽर्कवर्णाय बा° । ९ ख. ग. घ. ङ °लाङ्गुचरगो° । १० ख. ग. घ. ङ. °भैतुष्टाय त्रि°। ११ ङ. ... घोषाय । १२ ङ. °ष्पदरथाच । १३ ग °रथाय । १४ ग. ङ. ते । त्र्यम्बिकाम्बिकना° । १५ ख. घ. °घ्न हर... सूदन । स° । १६ ख. ङ. °घरवप्रक्ष । १७ ख घ. ङ. पचोऽनल । ज° । १८ घ. ङ °यजाण्ड° । १९ घ. °... च । चरा° । २० ग. घ. ङ. °स्यं स्रष्टा त्वं । २१ घ. ङ. °सप्सु त्र° । २२ घ. ङ. °दां विधिः । स° । २३ ख. गं. ... खं वा° । २४ क. तथोङ्का° । २५ ख. °नः । हाई हाई हवोहाई हुवाचाऽऽहुतिकाऽसकृत् । गा° । ग. °नः । ... य हुवोहायिहुवावाऽऽहुतिवाऽसकृत् । गा° । घ. °नः । हाइ हाइ हुवोहाई हुवाचाऽऽहुतिसकृत् । गा° । ङ. °नः । ... हुवोहाजि हुवाचाऽऽहुतिवासकृत् । गा° । २६ घ. °र्जित । सं° ।

[illegible]रस्त्वमृतवो मासो मासार्द्धमेव च । कलाकाष्ठानिमेषाश्च नक्षत्राणि युगा ग्रहाः ॥ २३३
[illegible]णां कुकुद्मं त्वं हि गिरीणां शिखराणि च । सिंहो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम् २३५
[illegible]रो क्षुद्रधीनां च यन्त्राणां धनुरेव च । वज्रं प्रहरणानां च व्रतानां सत्यमेव च ॥
[illegible] द्वेषश्च रागश्च मोहः क्षमा दमः शमः । व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥
[illegible]दी त्वं शरी चापि खट्वाङ्गी मुर्मरी तथा । छेत्ता भेत्ता प्रहर्ता च त्वं नेतोऽप्यन्तको मतः
[illegible]क्षणसंयुक्तो धर्मोऽर्थः काम एव च । इन्द्रः समुद्राः सरितः पल्वलानि सरांसि च ॥२३
[illegible]वैली तृणौषध्यः पशवो मृगपक्षिणः । द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ॥ २३८
[illegible]देश्चान्तश्च मध्यश्च गायत्र्योङ्कार एव च । हरितो लोहितः कृष्णो नीलः पीतस्तथाऽरुणः
[illegible]द्रुश्च कपिलश्चैव कपोतो मेचकस्तथा । सुवर्णरेता विख्यातः सुवर्णश्चाप्यतो मतः ॥ २४०
सुवर्णनामा च तथा सुवर्णप्रिय एव च । ( * त्वमिन्द्रोऽथ यमश्चैव वरुणो धनदोऽनलः ॥२४
उत्फुल्लश्चित्रभानुश्च स्वर्भानुर्भानुरेव च । होत्रं होता च होमस्त्वं हुतं च प्रहुतं प्रभुः ॥ २४
सुपर्णश्च तथा ब्रह्म यजुषां शतरुद्रियम् । पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ॥ २४
गिरिः स्तोकस्तथा वृक्षो जीवः पुद्गल एव च )। सत्त्वं त्वं च रजस्त्वं च तमश्च प्रजनं तथा ॥
प्राणोऽपानः समानश्च उदानो व्यान एव च । उन्मेषश्चैव मेषश्च तथा जृम्भितमेव च ॥ २४६
लोहितान्ङ्गो गदी दंष्ट्री महावक्त्रो महोदरः । शुचिरोमा हरिश्मश्रुरूर्ध्वकेशस्त्रिलोचनः ॥ २४
गीतवादित्रनृत्याङ्गो गीतवादनकप्रियः । मत्स्यो जलो जलो जल्यो जवः कालः कली कलः
विकालश्च सुकालश्च दुष्कालः कालनाशनः । मृत्युश्चैव क्षयोऽन्तश्च क्षमापायकरो हरः ॥ २
संवर्तकोऽन्तकश्चैव संवर्तकबलाहकौ । घटो घटीको घण्टीको चूडालो लवलो बली ॥
ब्रह्मकालोऽग्निवक्त्रश्च दण्डी मुण्डी च दण्डधृक् । चतुर्युगश्चतुर्वेदश्चतुर्होत्रश्चतुष्पथः ॥
चतुराश्रमवेत्ता च चातुर्वर्ण्यकरश्च ह । क्षराक्षरप्रियो धूर्तोऽगण्योऽगण्यगणाधिपः ॥
रक्तमाल्याम्बरधरो गिरिशो गिरिकप्रियः । शिल्पीशः शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्तकः
भगनेत्रान्तकश्चन्द्रः पूष्णो दन्तविनाशनः । + स्वाहा स्वधा वषट्कार नमस्कार नमोऽस्तु
[illegible]ढावर्तश्च गूढश्च गूढप्रतिनिषेवितः ॥
[illegible]रणस्तारकश्चैव सर्वभूतसुतारणः । धाता विधाता सत्त्वानां निधाता धारणो धरः ॥

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तके नास्ति । + इदमर्धं नास्ति क. पुस्तके ।

१ क. मासा मासा । २ ख. युगग्र । ग. ङ. युगं ग्र° । ३ ख ङ. च । त्वमेव चेच्छा द्वेषश्च राग° । शमः । घ. च । त्वमेव चेच्छा द्वेषश्च रागो मोहः क्षमा शमः । ४ ख. ग. घ. ङ. °ता मन्ता मनो म° । ५ ख. घर्मार्थः । ६ ख. ग. घ ङ. °वल्यस्तृणौ । ७ क. ग. °लपुष्प° । ८ ख. ङ. °श्चान्तं च मध्यं च गा° । ९ [illegible] °न्द्रश्च य° । १० ग. ङ. °भुः । त्रैसोपर्ण त° । घ. °भुः । त्रैसौपर्ण त° । ११ ग. घ. ङ. गिरिकोथेन्दुको ङ. ख. घ. जीवमुद्र° । १३ घ. °त्वं च त्वं रजश्चैव त° । १४ ङ. °जश्च त्वं त° । १५ ख. घ. ङ. °पश्च निमेषश्च क्षुतं [illegible] १६ ख. ग. घ. ङ. °ताम्राङ्गो दं° । १७ ख. ग. रः । सुचीरो° । १८ घ. ङ. °श्च दुःकालः । १९ क. °लः कट° [illegible] ख. घ. ङ. °री करः । २१ क. बलम् । २२ घ. मुण्डश्चिद° । ङ. मुण्डश्चिदण्डभृत् । २३ ख. ग. गण्यगण्यो गण° [illegible]गण्यागण्यग° । २४ क. °पः । रुद्राक्षमा° । २५ क. गिरिको° । २६ ख. ग. ङ. °मालाम्ब° । २७ ग. ङ. [illegible] २८ ख. घ. नां विश्वा° । २९ ङ. °ता धर° ।

( दक्षशापवर्णनम् )

तपो ब्रह्म च सत्यं च ब्रह्मचर्यमथाऽऽर्जवम् । भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भ
भूर्भुवस्वरितिश्चैव तथोत्पत्तिर्महेश्वरः । ईशानोद्वीक्षणः शान्तो दुर्दान्तो दन्तनाशनः
ब्रह्मावर्त सुरावर्त कामावर्त नमोऽस्तु ते । कामबिम्बनिहर्ता च कर्णिकाररजःप्रियः
मुखचन्द्रो भीममुखः सुमुखो दुर्मुखो मुखः । चतुर्मुखो बहुमुखो रणे ह्यभिमुखः सदा
हिरण्यगर्भः शकुनिर्महोदधिः परो विराट् । अधर्महा महादण्डो दण्डधारो रणप्रियः ।
गौतमो गोप्रतारश्च गोवृषेश्वरवाहनः । * धर्मकृद्धर्मस्रष्टा च धर्मो धर्मविदुत्तमः ॥
त्रैलोक्यगोप्ता गोविन्दो मानदो मान एव च । तिष्ठंस्थिरश्च स्थाणुश्च निष्कम्पः कम्प
दुर्वारणो दुर्विषदो दुःसहो दुरतिक्रमः । दुर्धरो दुष्प्रकम्पश्च दुर्विदो दुर्जयो जयः ॥
...शः शशाङ्कः शमनः शीतोष्णं दुर्जराऽथ तृट् । आधयो व्याधयश्चैव व्याधिहा व्याधिगः
...ज्ञो यज्ञो मृग व्याधो व्याधीनामाकरोऽकरः । शिखण्डी पुण्डरीकाक्षः पुण्डरीकावलोकनः
...ण्डधरः सदण्डश्च दण्डमुण्डविभूषितः । विषपोऽमृतपश्चैव सुरापः क्षीरसोमपः ॥
...धुपश्चाज्यपश्चैव सर्वपश्च महाबलः । वृषांश्ववाह्यो वृषभस्तथा वृषभलोचनः ॥
वृषकश्चैव विख्यातो लोकानां लोकसत्कृतः । चन्द्रादित्यौ चक्षुषी ते हृदयं च पितामहः ॥
...ग्निरापस्तथा देवो धर्मकर्मप्रसाधितः ॥
...गुह्यं न च गोविंदः पुराण ऋषयो न च । माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव
...विक्रेयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम् । ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥
...रणीयोऽहं तवानघ नमोऽस्तुते । भक्तानुकम्पी भगवान्भक्तश्चाहं सदा त्वयि ॥
...नेकानि पुंसामाहत्य दुर्दशः । तिष्ठत्येकः समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः ।
...द्रा जितश्वासाः सत्त्वस्थाः समदर्शिनः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने
...सर्वभूतानि युगान्ते समुपस्थिते । यः शेते जलमध्यस्थस्तं प्रपद्येऽप्सु शायिनम् ॥
...श्य वदने राहोर्यः सोमं ग्रसते निशि । ग्रसत्यर्कं च स्वर्भानुर्भूत्वा सोमाग्निरेव च ॥
...ष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् । रक्षन्तु ते हि मां नित्यं नित्यमाप्याययन्तु मा
...आप्युत्पतिता गर्भा ह्यधोभागगताश्च ये। तेषां स्वाहाः स्वधाश्चैव आप्नुवन्तु स्वदन्तु च॥
...रुद्र रोदन्ति देहस्थः प्राणिनो रोदयन्ति च । हर्षयन्ति च हृष्यन्ति नमस्तेभ्यस्तु नित्...
...समुद्रे नदीदुर्गे पर्वतेषु गुहासु च । वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥
...थ्यथेषु रथ्यासु चत्वरेषु सभासु च । (+हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ।

* इदमर्धं नास्ति ख. ग. ध. ङ. पुस्तकेषु । + धनुश्चिह्नान्तर्गतग्रन्थः क. ख. घ. पुस्तकेषु नास्ति

१ ख. ग. घ. ङ. ब्रह्मा । २ क. ग. ङ. °रितश्चै° । ३ ख. ग. घ. तथा ह्यभिमु° । ४ क. °नो वीक्ष...
...°र्तः सु° । ६ ख. ग. घ. ङ. °म्बविनिर्हन्ता क° । ७ घ. °मुखस्तथा ...° ...तिः ॥ ... घ. ङ. °दधि...
... घ. ङ. °हावृक्षो द° । १० ख ग. घ. ङ. गोनघो गोप्र° । ११ ...
°न्दो गोमार्गामार्गए° । घ. °न्दो गोमार्गोमार्गए° । ङ. °न्दो गोविन्दः ... ख. °न्दो...
घ. च । °रोदुः प्रक° । १५ ङ. ष्णं क्षुज्जरा° । १६ ख. ण्डधृतसद्दण्डश्च रुप ग. शुक्रो । ... ख. ... घ. नि...
...व. °णाट°ण्डविनाशनः । वि° । ङ.ण्डभृतसकुंदण्डश्च रुद्रदण्डविनाशनम् । विजितास्तु ये । ... घ. ...
... ख. ग. ध° । १८ ख. ग. ङ. °धुश्च्युताज्य° । घं. °धुच्युताच्यपाश्चै°
ग. घ. ङ. गोपोऽस्तु । २२ ख. ङ. रक्षासु ।

दक्षप्रोक्तं स्तवं चापि कीर्तयेद्यः शृणोति वा । नाशुभं प्राप्नुयात्किंचिद्दीर्घं चाऽऽयुर
यथा सर्वेषु देवेषु वरिष्ठो योगवान्हरः । तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मनिर्मित
यशोराज्यसुखैश्वर्यवित्तायुर्धनकाङ्क्षिभिः । स्तोतव्यो भक्तिमास्थाय विद्याकामैश्च
व्याधितो दुःखितो दीनश्चौरत्रस्तो भयार्दितः । राजकार्यनियुक्तो वा मुच्यते महतो
अस्मिन्देहेनेन चैव देहेन गणानां स गणाधिपः । इह लोके सुखं प्राप्य गण एवोपपद्यते
संभाषणं च यक्षाः पिशाचा वा न नागा न विनायकाः । कुर्युर्विघ्नं गृहे तस्य यत्र संस्तूयते
शृणुयाद्वा इदं नारी सुभक्त्या ब्रह्मचारिणी । पितृभिर्भर्तृपक्षाभ्यां पूज्या भवति देवव
शृणुयाद्वा इदं सर्वं कीर्तयेद्वाऽप्यभीक्ष्णशः । तस्य सर्वाणि कार्याणि सिद्धिं गच्छन्त्य
मनसा चिन्तितं यच्च यच्च वाचाऽप्युदाहृतम् । सर्वं संपद्यते तस्य स्तवनस्यानुकीर्तनात् ॥
देवस्य सगुहस्याथ देव्या नन्दीश्वरस्य तु । बलिं विभवतः कृत्वा दमेन नियमेन च ॥
तः स शुल्को गृहीयान्नामान्याशु यथाक्रमम् । ईप्सितांल्लँभतेऽत्यर्थं कामान्भोगांश्च मानव
मृतश्च स्वर्गमाप्नोति स्त्रीसहस्रपरीवृतः ॥
सर्वकर्मसु युक्तो ... 
...र्वा युक्तो वा सर्वपातकैः ... । पठन्दक्षकृतं स्तोत्रं सर्वपापैः प्रमुच्यते ॥
...लोक्यं पूज्यमानः सुरासुरैः ॥
...युक्तेन विमानेन विराजते । आभूतसंप्लवस्थायी ... अनुचरो भवे...
...व्यासः पराशरसुतः प्रभुः । नैतद्वेदयते कश्चिन्नेदं श्राव्यं तु कस्यचित् ॥
... गुह्यं येऽपि स्युः पापकारिणः । वैश्या स्त्रियश्च शूद्राश्च रुद्रलोकमवाप्नुयुः ॥ ३...
... विप्रेभ्यः सदा पर्वसु पर्वसु । रुद्रलोकमवाप्नोति द्विजो वै नात्र संशयः ॥ ३२...

इति श्रीमहापुराणे वायुप्रोक्ते दक्षप्रोक्तस्तवो नाम त्रिंशोऽध्यायः ॥ ३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४४७

---

अथैकत्रिंशोऽध्यायः ।

---

देववंशवर्णनम् ।

... उवाच—

...नुज्ञाता कथा पापप्रणाशिनी । या दक्षमधिकृत्येह कथा शर्वादुपागता ॥
...ङ्गेन कथा ह्येषा प्रकीर्तिता । पितॄणामानुपूर्व्येण देवान्वक्ष्याम्यतः परम् ॥
... पूर्वमासन्स्वायंभुवेऽन्तरे । देवा यामा इति ख्याताः पूर्वं ये यज्ञसूनवः ॥
...ह्मणः पुत्रा जिता जिदजिताश्च ये । पुत्राः स्वायंभुवस्यैते शुक्रनाम्ना तु मानसाः ॥
...ते देवानां तु त्रयः स्मृताः । छन्दोगास्तु त्रयस्त्रिंशत्सर्वे स्वायंभुवस्य ह ॥
...दे... दीधयः स्ववसो मतिः । विभासश्च क्रतुश्चैव प्रजातिर्विशतो द्युतिः ॥

---

...घ. च । २ ख. घ. दीर्घमायु' । ३ घ. सुभगा । ४ क. सं॰युक्तो गृ॰ । ५ ग. शुक्रो । ६ ख.
...व. 'णाशनी । ७ घ. ङ. 'नी । यद्दक्ष' । ८ ख. ग. घ. ङ. 'त्रा अजरत्वादजितास्तु ये । ९ ग. ङ.
... ख. ग. ङ. 'त्स वै स्वा' ।

...समृद्धराष्ट्रं स्फीतं च नानाजनपदाकुलम्। नानावृक्षवनोद्देशं नानानगरसुवेष्टितम्॥
...नरनारीगणाकीर्णं नित्यं प्रमुदितं शिवम्। बहुधान्यधनोपेतं नानानृपतिपालितम्॥
उपेतं कीर्तनशतैर्नानारत्नाकराकरम्॥
तस्मिन्देशे समाख्याता हेमशङ्खदलप्रभाः। महाकाया महावीर्याः पुरुषाः पुरुषर्षभाः॥
संभाषणं दर्शनं च समस्थानोपसेवनम्। देवैः सह महाभागाः कुर्वते तत्र वै प्रजाः॥
दश वर्षसहस्राणि तेषामायुः प्रकीर्तितम्। धर्माधर्मविशेषश्च न तेष्वस्ति महात्मसु॥
अहिंसा सत्यवाक्यं च प्रकृत्यैव हि वर्तते॥
ते भक्त्या शंकरं देवं गौरीं परमवैष्णवीम्। इज्यापूजानमस्कारांस्ताभ्यां नित्यं प्रयुञ्जते॥
इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम त्रिचत्वारिंशोऽध्यायः॥ ४३॥
आदितः श्लोकानां समष्ट्यङ्काः—३२२३

---

अथ चतुश्चत्वारिंशोऽध्यायः।

---

भुवनविन्यासः।

सूत उवाच—

निसर्ग एष विख्यातो भद्राश्वानां यथार्थवत्। शृणुध्वं केतुमालानां विस्तरेण प्रकीर्तनम्॥ १
...पधस्याचलेन्द्रस्य पश्चिमस्य महात्मनः। पश्चिमेन हि यत्तत्र दिक्षु सर्वासु कीर्तितम्॥ २
...नां नदीनां च विशेषतः। तथा जनपदानां च विस्तरं श्रोतुमर्हथ॥ ३
...ः कृष्णो जयन्तो हरिपर्वतः। *अशोको वर्धमानश्च सप्तैते कुलपर्वताः॥ ४
...ऽपि पर्वता बहुविस्तराः। कोटिकोटिशता ज्ञेयाः शतशोऽथ सहस्रशः॥ ५
...पदा नानाजातिसमाकुलाः। नानाप्रकारविज्ञेयास्त्वनेकनृपपालिताः॥ ६
...न्ता विविधाः प्रथिता भुवि। अध्यासिता जनपदैः कीर्तनैश्च विभूषिताः॥ ७
...मधेयानि राष्ट्राणि विविधानि च। गिर्यन्तरनिविष्टानि समेषु विषमेषु च॥ ८
...ः पौरा गोमर्तुष्यकपोतकाः ]। तत्सुखाँ भ्रमरा यूथा माहेयाचलकूटकाः॥
...वकाः क्रौञ्चाः कृष्णाङ्गमणिपुञ्जकाः। कूटकम्बलमौषीयाः समुद्रान्तरकास्तथा
...कुचाः श्वेताः सुवर्णकटकाः शुभाः। श्वेताङ्गाः कृष्णपादाश्च विहाः कपिलकर्णि॥
...ज्वाला हीनानाँ वनपातकाः। महिषाः कुमुदाभाश्च करषाटाः सहोत्कचाः।
...नासा वनासगजभूमिकाः। करञ्जमञ्जमा वाहाः किष्किण्डीपाण्डुभूमिकाः॥
...जङ्गा वङ्गा राजीवकोकिलाः। वाचाङ्गाश्च महाङ्गाश्च मधौरेयाः सुरेचकाः॥

* इदमर्धं नास्ति ग. पुस्तके। + धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके नास्ति।

...ग. घ. ङ. 'गरपत्तनम्'। २ ग, घ. ङ. °रीं चप्रभविष्ण'। ३ घ. ङ. सौरा ४ घ. ङ. °नुष्या ग. ...मास'। ६ ङ. °णियुञ्ज'। ७ घ, ङ. श्येनाः। ८ ग. घ. ङ. °ट'। ९ ग. विहाः क'। घ. °हा... १० ग. घ. °काः। उत्या'। ङ. °काः। उत्थाक°। ११ ग. खाः। ङ. °नावान'। १२ घ. सुकन...

ाः काचलाश्चैव श्रवणा मत्तकासिकाः । गोदावा वकुला वाङ्गा वङ्कामोदकाः कलाः
न्ति महाभागाः प्रथमां तु महानदीम् । सुवर्णां पुण्यसलिलां महानागनिषेविताम् ॥ १९
ां तामसीं श्यामां सुमेधां बकुलां नदीम् । विकीर्णां शिखिमालां च तथा दर्भावतीमपि ॥
ंदीं शुकनदीं पलाशां च महानदीम् । भीमां प्रभञ्जनां काञ्चीं पुण्यां चैव कुशावतीम् ॥
शाकवतीं चैव पुण्योदां च महानदीम् । (*चन्द्रावतीं सुमूलां च ऋषभां चाऽऽपगोत्तमाम्
समुद्रमालां च तथा चम्पावतीमपि । एकाक्षां पुष्कलां वाहां सुवर्णां नन्दिनीमपि ॥ २०
लेन्दीं चैव पुण्योदां भारतीं च महानदीम् । सीतोदापातिकां ब्राह्मीं विशालां च महानदीम्)
री कुम्भकारीं च रुषां चैवापगोत्तमाम् । महिषीं मानुषीं दण्डां तथा नदनदीं शुभाम् ॥२२
एताश्चान्याश्च पीयन्ते बहुशो हि सरितोत्तमाः+। देवर्षिसिद्धचरिताः पुण्योदाः पापहाः शुभाः॥
नानाजनपदास्फीतं महापगाविभूषितम् । नानारत्नौघसंपूर्णं नित्यं प्रमुदितं शिवम् ॥ २४
उदीर्णं धनधान्याढ्यैर्नरवासैः समन्ततः । संनिविष्टं महाद्वीपं पश्चिमं सुकृतात्मनाम् ॥
निसर्गः केतुमालानामेष यः परिकीर्तितः ॥ २

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२१८

---

अथ पञ्चचत्वारिंशोऽध्यायः ।

---

भुवनविन्यासः ।

शांशपायन उवाच—

र्वापरौ समाख्यातौ द्वौ देशौ नस्त्वया प्रभो । उत्तराणां च वर्षाणां दक्षिणा
आचक्ष्व नो यथातथ्यं ये च पर्वतवासिनः ॥

सूत उवाच—

दक्षिणेन तु श्वेतस्य नीलस्यैवोत्तरेण तु । वर्षं रमणकं नाम जायन्ते तत्र मानवाः
सर्वर्तुकामदाः सत्त्वा जरादुर्गन्धवर्जिताः । शुक्लाभिजनसंपन्नाः सर्वे च प्रियदर्शनाः
तत्रापि सुमहान्दिव्यो न्यग्रोधो रोहिणो महान् । तस्य पीत्वा फलरसं पिबन्तो गतक्लम
वर्षसहस्राणि शतानि दश पञ्च च । जीवन्ति ते महाभागाः सदा हृष्टा नरो
रेण तु श्वेतस्य शृङ्गसाह्वस्य दक्षिणे । वर्षं हिरण्वतं नाम यत्र हैरण्वती नदी ॥
बलाः सुतेजस्का जायन्ते तत्र मानवाः । सर्वर्तुकामदाः सत्त्वा धनिनः प्रियद ॥
ादश सहस्राणि वर्षाणां तेऽमितौजसः । आयुष्प्रमाणं जीवन्ति शतानि दश
न्वर्षे महावृक्षो लकुचः पड्रसाश्रयः । तस्य पीत्वा फलरसं तत्र जीवन्ति मान
शृङ्गवतः शृङ्गाण्युच्छ्रितानि महान्ति च । एकं मणिमयं तेषामेकं चैव हिरण्मय
मयं चैकं भवनैरुपशोभितम् ॥

* घमुस्थिहान्तर्गत न्थो घ. पुस्तके नास्ति । + आर्षोऽयं पाठः ।

ख ग. ङ. °सताः का° । २ घ. °त्तु नसि° । ३ ग. ङ. सुवक्षां पु° । ४ ग. ङ. बहुलां । ५ घ
°गृर्वि° । ६ क. ग. °न्यायैर्न° । ७ °शंपायन ।

त्तरस्य समुद्रस्य समुद्रान्ते च दक्षिणे । कुरवस्तत्र तद्वर्षं पुण्यं सिद्धनिषेवितम् ॥
त्र वृक्षा मधुफला नित्यं पुष्पफलोपगाः । वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥
सर्वकामफलास्तत्र केचिद्वृक्षा मनोरमाः । गन्धवर्णरसोपेतं प्रक्षरन्ति मधूत्तमम् ॥
अपरे क्षीरिणो नाम वृक्षास्तत्र मनोरमाः । ये क्षरन्ति सदा क्षीरं षड्रसं ह्यमृतोपमम् ॥
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका । सर्वतः सुखसंस्पर्शा निष्पङ्का नीरुजा शुभा
देवलोकाच्युतास्तत्र जायन्ते मानवाः शुभाः । शुक्लाभिजनसंपन्नाः सर्वे च स्थिरयौवनाः ॥
मिथुनानि प्रसूयन्ते स्त्रियश्चातिमनोहराः । ते च तं क्षीरिणं वृक्षं पिबन्ति ह्यमृतोपमम् ॥
मिथुनं जायते सद्यः समं चैव विवर्धते । समं शीलं च रूपं च म्रियन्ते चैव ते समम् ॥
अन्योन्यमनुरक्ताश्च चक्रवाकसधर्मिणः । अनामया ह्यशोकाश्च नित्यं सुखनिषेविणः ॥ १९
त्रयोदश सहस्राणि शतानि दश पञ्च च । जीवन्ति ते महावीर्या न चान्यस्त्रीनिषेविणः ॥ २०
कुरूणामपि चैतेषां शृणुध्वं विस्तरेण तु । जारुधेः शैलराजस्याप्युत्तरेणोत्तरस्य हि ॥
दिक्षु सर्वासु यद्यत्र कीर्त्यमानं विबोधत ॥ २१
ततः ककन्दरदरीगुहानिर्झरमण्डितौ । नैककुञ्जवनोपेतौ चित्रैर्धातुविभूषितौ ॥ २२
[illegible]रकधातुकलिलौ सर्वधातुविभूषितौ । पुष्पमूलफलोपेतौ सिद्धचारणसेवितौ ॥
[illegible]प्येतौ सुमहान्तावुच्छ्रितौ कुलपर्वतौ । ताभ्यां कूटशतैर्नैकैस्तद्द्वीपमुपसेवितम् ॥
[illegible]कान्तश्च शैलश्च सूर्यकान्तश्च सानुमान् । ययोर्मध्येन सा याता भद्रसीमा महानदी ॥
[illegible]श्च नद्योऽन्याः प्रसन्नसुरसोदकाः । पर्याप्तोदाः कुरूणां हि स्नानपानावगाहनैः ॥
[illegible]वाहिन्यो महानद्यः सहस्रशः । मधुमैरेयवाहिन्यो घृतवाहिन्य एव च ॥
[illegible]यास्ततः स्वादन्नपर्वताः । अमृतस्वादुकल्पानि फलानि विविधानि च ॥
[illegible]नि मूलानि च फलानि च । पञ्चयोजनमानानि महागन्धानि सर्वशः ॥
[illegible] पुष्पाणि च सहस्रशः । उपभोगसहस्राणि भद्राणि च महान्ति च ॥
[illegible]नि स्पर्शोपेतानि सर्वशः । तमालागुरुगन्धानां चन्दनानां वनानि च ॥
[illegible] प्रफुल्लानि सदैव च । वृक्षगुल्मलताढ्यानि वनानि सुसुखानि च ॥
[illegible]नि द्विजैश्चान्यैर्द्विजोत्तमाः । पद्मोत्पलवनाढ्यानि सरांसि च सहस्रशः ॥
[illegible]द्धाश्च बहुमाल्यानुलेपनाः । मनोहरसुखैश्चित्रैः पक्षिसंघैर्निकूजिताः ॥
[illegible]गाश्च अनेकगुणविस्तराः । विहारभूमयो रम्याः सर्वर्तुषु सुखप्रदाः ॥
[illegible]तः स्फीता मणिहेमपरिष्कृताः । शिलागृहा वृक्षगृहा वरेण्याः कदलीगृहाः ॥
[illegible]सुखानि समन्ततः । शुद्धशङ्खदलाभानि भूमिवेश्मशतानि च ॥
[illegible]णिजालान्तराणि च । सुवर्णमणिचित्राणि सर्वत्र विपुलानि च ॥
[illegible]ण्यानि च सर्वशः । नानाकाराणि वासांसि सूक्ष्माणि सुसुखानि
[illegible]विस्तराः । फलन्ति कल्पवृक्षाणां सहस्राणि शतानि च ॥

---

[illegible] ङ. °र्णवलोपे° । ३ ङ. °त्तरेण हि । ४ ग. घ. ङ. °त्रभानुवि° । ५ क. ग. [illegible]
[illegible] समर्थानि भ° । ८ ग. घ. ङ. °सुखाश्चात्रपक्षिसं निकू° । ९ घ. ङ. °हा [illegible]
[illegible]. वियुतानि । १२ ग. घ. °णि रमण्या° ।

। तथोद्यानं सर्वत्रैव हि तत्पुरम् । सर्वद्वीपप्रमुदितं नरनारीसमाकुलम् ॥ ४१
... चानिलस्तत्र नानापुष्पाधिवासितः ॥
...सुखाल्हादस्तस्मिन्द्वीपे श्रमापहे । तत्र स्वर्गपरिभ्रष्टा जायन्ते हि नराः सदा ॥
...तदपि हि स्वर्गं तत्रापि च गुणोत्तमम् ॥ ४२
...कान्ता नरवराः श्यामाङ्गाः पूर्वकूलजाः । श्यामावदाताः सुखिनः सूर्यकान्ता वराः प्रजाः
...न्देशे नराः श्रेष्ठा देवसत्त्वपराक्रमाः । सदा विहारिणः सर्वे कामवृत्त्या सुवर्चसः ॥ ४४
...ाङ्गदकेयूरहारकुण्डलभूषिताः । स्रग्विणश्चित्रमुकुटाश्चित्राच्छादनवाससः ॥ ४५
...र्णयौवनधराः सुप्रियाः प्रियदर्शनाः । प्रजा वर्षसहस्राणि जीवन्ति सुबहून्युत ॥ ४६
न ताः प्रसवधर्मिण्यो न वंशप्रेक्षयो विधिः । मिथुनं जायते वृक्षादुपक्षममनीदृशम् ॥ ४७
सामान्यविभवाः सर्वे ममत्वपरिवर्जिताः । न तत्र विद्यते धर्मो नाधर्मः संप्रवर्तते ॥ ४८
न व्याधिर्न जरा तत्र न दुर्बधा न च क्लमः । पूर्णे काले विनश्यन्ति जलबुद्बुदवच्च ते ॥ ४९
एवमत्यन्तसुखिनः सर्वदुःखविवर्जिताः । रक्षा धर्मं न पश्यन्ति दुःखाद्धर्मोऽभिजायते ॥ ५०
उत्तराणां कुरूणां तु पार्श्वे ज्ञेयं तु दक्षिणे । समुद्रमूर्मिमालाढ्यं नानास्वरविभूषितम् ॥
...योजनसाहस्रमतिक्रम्य सुरालयम् । चन्द्रद्वीपमिति ख्यातं चन्द्रमण्डलसंस्थितम् ॥
...योजनानां तु सर्वतःपरिमण्डलम् । नानापुष्पफलोपेतं समृद्ध्या परया युतम् ॥
...योजनविस्तीर्णमुच्छ्रितं तावदेव तु ॥
...य मध्ये गिरिवरः सिद्धचारणसेवितः । चन्द्रतुल्यप्रभैः कान्तैश्चन्द्राकारैः सुलक्षणैः ॥
...वतवैदूर्यकुमुदैश्चित्रोऽसौ कुमुदप्रभः । अनेकचित्रकोद्यानो नैकनिर्झरकन्दरः ॥
...हासानुदरीकुञ्जैर्विविधैः समलंकृतः ॥
...स्माच्छैलान्महापुण्या चन्द्रांशुविमलोदका । प्रवहत्युत्तमनदी चन्द्रावर्ता तरङ्गि...
...त्र चन्द्रमसः स्थानं नक्षत्राधिपतेर्वरम् । सदाऽवतरते तत्र चन्द्रमा ग्रहनायक...
...त्र चन्द्रमसो नाम्ना शैलः स तु परिश्रुतः । चन्द्रद्वीपं महाद्वीपं प्रकाशं दिवि नवाः
तत्र चन्द्रप्रतीकाशाः पूर्णचन्द्रनिभाननाः । चन्द्रकान्ताः प्रजाः सर्वा विमलाश्चन्दर्शन...
अत्यन्तधार्मिकाः सौम्याः सत्यसंधाः सुतेजसः । प्रजास्तत्र सदाचारा दशवर्षशतो...
पश्चिमेन तु द्वीपस्य पश्चिमस्य प्रकीर्तितम् । चतुर्योजनसाहस्रं समतीत्य महोदधिम्...
...योजनसाहस्रं समन्तात्परिमण्डलम् । द्वीपं भद्राकरं नाम नानापुष्पोपशोभितम् ॥
...तधनधान्याढ्यमनेकनृपपालितम् । नित्यं प्रमुदितं स्फीतं महाशैलैश्च शोभितम् ॥
...भद्रासनं वायोर्नानारत्नैश्च मण्डितम् । तत्र विग्रहवान्वायुः सदा पर्वसु पूज्...
...ेयसुवर्णाभास्तपनीयविभूषिताः । विराजन्तेऽगदप्रख्यास्तत्र चित्राम्बर...
...न्तो महाभागाः पञ्चवर्षशतायुषः । सत्यसन्धा मुदा युक्ताः प्रजास्तत्र...

सूत उवाच—

...क्षिनिसर्गोऽयं वर्षाणां भारते युगे । दृष्टः परमतत्त्वज्ञैर्भूयः किं...

[Right margin fragments:] नाब्द्युगत्र ... गान ... ंस कि ... जगेष्वा ... एतत्प्रभ्रू ... क्षुः स ... ो महात ... ात्मकम ज्वरः ... नरो ... वनैस्सदा ॥ ... यद ॥ ... रः ॥ ... दश ... निब ... खन्ति मान ... भिः ता ... चैव हिरण्मय ... ष्वेन्दुको ... मयश्च ... तं ... ज । शुभा ... कृ ... का । १०ो

...पाठः ।

१ ग. घ. ङ. 'ह्लादो तस्मि°' । २ ग. घ. ङ. 'माङ्गाः पूर्वकूलकाः । श्या°' । ... ङ. बहुलं । ५ घ ...
...र्णु... ४ । ५ ङ. 'मतीह' । ६ घ. दुःखधर्मो न जा° । ७ ग. ङ. 'वैदूर्यकुमुदै°' ... । १७ ...
...त्रो... 'द्योप°' । ९ घ. ङ. 'धानाढ्यं' । १० ग. घ. ङ. 'युदेव' । ११ घ. ङ. 'या...

ख्याते त्वेवमृषयः सूतपुत्रेण धीमता । उत्तरश्रवणे भूयः पप्रच्छुस्तदनन्तरम् ॥

ऋषय ऊचुः—

यदिदं भारतं वर्षं यस्मिन्स्वायंभुवादयः । चतुर्दशैते मनवः प्रजासर्गे भवन्त्युत ॥
एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम । एतच्छ्रुत्वा वचस्तेषामब्रवील्लोमहर्षणः ॥
पौराणिकस्तदा सूत ऋषीणां भावितमनाम् । एतद्विस्तरतो भूयस्तानुवाच समाहितः

सूत उवाच—

निसर्ग एष विख्यातः कुरूणां तु यथार्थवत् । भारतस्य तु वक्ष्यामि निसर्गं तं निबोधत ॥
पुण्यतीर्थे हिमवतो दक्षिणस्यातलस्य हि । पूर्वपश्चायतस्यास्य दक्षिणेन द्विजोत्तमाः ॥
तथा जनपदानां च विस्तरं श्रोतुमर्हथ । अत्र वो वर्णयिष्यामि वर्षेऽस्मिन्भारते प्रजाः ॥ ७४
इदं तु मध्यमं चित्रं शुभाशुभफलोदयम् । उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत् ॥ ७५
पूर्वं यद्भारतं नाम यत्रेयं भारती प्रजा । भरणाच्च प्रजानां वै मनुर्भरत उच्यते ॥
रुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम् ॥
तः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते । न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ॥ ७६
भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्तिताः । समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ॥ ७७
इन्द्रद्वीपः कसेरुश्च ताम्रवर्णी गभस्तिमान् । नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥
यं तु नवमस्तेषां द्वीपः सागरसंवृतः । योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरम् ॥
यतो ह्याकुमारि[illegible]प्रभवाच्च वै । तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ॥ ८०
[illegible]न्तेषु नित्यशः । पूर्वे किराता ह्यस्यान्ते पश्चिमे यवनाः स्मृताः ॥ ८१
[illegible]ये शूद्राश्च भागशः । इज्यायुद्धवणिज्याभिर्वर्तयन्तो व्यवस्थिताः ॥
[illegible] परस्परम् । धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु ॥ ८४
[illegible]ां यथाविधि । इह स्वर्गापवर्गार्थं प्रवृत्तिर्येषु मानुषी ॥ ८५
[illegible] उच्यते । कृत्स्नं जयति यो ह्येनं स सम्राडिह कीर्त्यते ॥ ८६
[illegible]ो विराट्स्मृतः । स्वराडन्यः स्मृतो लोकः पुनर्वक्ष्यामि विस्तरम्
[illegible] कुलपर्वताः । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥
[illegible]लपर्वताः ॥
[illegible]मीपगाः । अभिजाताः सर्वगुणा विपुलाश्चित्रसानवः ॥
[illegible]स्तथा । कोलाहलः ससुरसो मैनाको वैद्युतस्तथा ॥
[illegible]ण्डुरपर्वतः । गन्तुप्रस्थः कृष्णगिरिर्गोधनो गिरिरेव च ॥
[illegible]तकस्तथा । श्रीपर्वतश्च कारुश्च कूटशैलो गिरिस्तथा ॥
[illegible]ाः स्वल्पोपजीविनः । तैर्विमिश्रा जनपदा आर्यम्लेच्छाश्च नित
[illegible]सिन्धुसरस्वती । शतद्रुश्चन्द्रभागा च यमुना सरयूस्तथा ॥
[illegible]ा देविका कुहूः । गोमती धुतपापा च बाहुदा च दृषद्वती ॥
[illegible]ीरा गण्डकी तथा । इक्षुर्लोहित इत्येता हिमवत्पादनिःसृत

[illegible] ङ. तेभ्योऽप' । ३ घ. ङ. आर्या म्ले° । ४ ङ. 'ना शर' । ५ ङ. बह[illegible]

( भुवनविन्यासः )

ह्मोत्तराः प्रविजया भार्गवा गेयमर्थकाः । प्राग्ज्योतिषाश्च मुण्डाश्च विदेहास्ताम्रलि
माला मगधगोविन्दाः प्राच्यां जनपदाः स्मृताः ॥
अथापरे जनपदा दक्षिणापथवासिनः । पाण्ड्याश्च केरलाश्चैव चौल्याः कुल्यास्तथैव च
सेतुका मूषिकाश्चैव कुमना वनवासिकाः । महाराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः
अ(आ)भीराः सहचैषीका आटव्याश्च वराश्च ये । पुलिन्दा विन्ध्यमूलीका वैदर्भा दण्ड
पौनिका मौनिकाश्चैव अस्मका भोगवर्धनाः । नैर्णिकाः कुन्तला अन्ध्रा उद्भिदा नलक
दाक्षिणात्याश्च वै देशा अपरांस्तान्निबोधत । सूर्पाकाराः कोलवना दुर्गाः कालीतकैः
पुलेयाश्च सुरालाश्च रूपसास्तापसैः सह । तथा तुरसिताश्चैव सर्वे चैव परक्षराः ॥
नासिक्याद्याश्च ये चान्ये ये वै चान्तरनर्मदाः । भानुकच्छाः समाहेयाः सहसा शाश्वतै
कच्छीयाश्च सुराष्ट्राश्च आनर्ताश्चार्बुदैः सह । इत्येते संपरीताश्च शृणुध्वं विन्ध्यवासिनः ॥
मालवाश्च करूषाश्च रोकलाश्चोत्कलैः सह । उत्तमार्णा दशार्णाश्च भोजाः किष्किन्धकैः
[illegible]लाः कोसलाश्चैव त्रैपुरा वैदिकास्तथा । तुमुरास्तुम्बुराश्चैव षट्सुरा निषधैः सह ॥
[illegible]स्तुंण्डिकेराश्च वीतिहोत्रा ह्यवन्तयः । एते जनपदाः सर्वे विन्ध्यपृष्ठनिवासि[illegible]
सव्ये हिमवतवक्ष्यामि पर्वताश्रयिणश्च ये । निगर्हरा हंसमार्गाः क्षुपणास्तङ्गणाः खसा[illegible]
अप्सरोगणसंयु[illegible]हूणा दर्वाः सहूहुकाः । त्रिगर्ता मालवाश्चैव किरातास्तामसैः सह ॥
कैलासपादात्संभूतं पुण्यानि कवयो विदुः । कृतं त्रेता द्वापरं च कलिश्चेति चतुष्टयम् ॥
तस्माद्दिव्या प्रभवति नदीरिष्टान्निबोधत ॥
प्रागुत्तरेण कैलासाद्दिव्यसत्त्वौ[illegible] वायुप्रोक्ते भुवनविन्यासो नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
[illegible] सुरधातुम[illegible]
चन्द्रप्रभो नाम गिरिः स शुद्धो रत्न[illegible]निभः । तस्य पादे महद्दिव्यम्[illegible]
तस्माद्दिव्या प्रभवति ह्यच्छोदा नाम निम्नगा । तस्यास्तीरे महद्दिव्यं [illegible]
तस्मिन्गिरौ निवसति मणिभद्रः सहानुगः । यक्षसेनापतिः क्रूरगुह्यकैः परि[illegible]
पुण्या मन्दाकिनी चैव निम्नगाच्छोदिका तथा । महीमण्डलमध्येन प्रविष्टे ते [illegible]
कैलासाद्दक्षिणप्राच्यां शिवसत्त्वौषधिं गुरुम् । मनः शिलामयं दिव्यं पिशङ्गं पर्वतं प्र[illegible]
लोहितो हेमशृङ्गस्तु गिरिः सूर्यप्रभो महान् । तस्य पादे महद्दिव्यं लोहितं नाम तत्सरः ।
तस्मात्पुण्यः प्रभवति लौहित्यः सदनो महान् । देवारण्यं विशोकं च तस्य तीरे महावनम्
तस्मिन्गिरौ निवसति यक्षो मणिवरो वशी । सौम्यैः सुधार्मिकैश्चैव गुह्यकैः परिवारितः ॥
कैलासाद्दक्षिणे पार्श्वे क्रूरसत्त्वौषधं गिरिम् । वृत्रकायात्किलोत्पन्नमञ्जनं त्रिककुं प्रति ॥
सर्वधातुमयस्तत्र सुमहान्वैद्युतो गिरिः । तस्य पादे सरः पुण्यं मानसं सिद्धसेवितम् ॥
तस्मात्प्रभवते पुण्या सरयूर्लोकभावनी । तस्यास्तीरे वनं दिव्यं वैभ्राजं नाम विश्रु[illegible]
कुबेरानुचरस्तत्र प्रहेतृतनयो वशी । ब्रह्मपातो निवसति राक्षसोऽनन्तविक्रमः । [illegible]भूषता
अन्तरिक्षचरैर्घोरैर्यातुधानशतैर्वृतः ॥ [illegible]हाद्रुमः ॥

१ घ. °शद्वसन्ते । २ क. °न्ते याज्ञिकाः सु° । ३ ङ. °तिवत्सेरः । ४ क. °नुषीः । [illegible] ६ ग. ङ. °न्तं सरस्तूदधिसं° । घ. °न्तं सरस्तूदधिसंप्लुतम् । त° । ७ क. सहादिव्यं । ८ ग. घ. [illegible] घ. ङ. क्रूरैर्गुह्य° । १० ङ. °धिं गिरिम् । म° । ११ ङ. °कटुं प्र° । १२ ग. घ. °ब्रह्मापेतो । १[illegible]

रक्षःपिशाचा यक्षाश्च सर्वे हैमवताः स्मृताः । हेमकूटे तु गन्धर्वा विज्ञेयाः साप्सरोगणा
सर्वे नागास्तु निषधे शेषवासुकितक्षकाः । महामेरौ त्रयस्त्रिंशद्रमन्ते यज्ञियाः सुराः ॥
नीले तु वैडूर्यमये सिद्धब्रह्मर्षयोऽमलाः ॥
दैत्यानां दानवानां च श्वेतपर्वत उच्यते । शृङ्गवान्पर्वतः श्रेष्ठः पितॄणां प्रतिसंचरः ॥
नवस्वेतेषु वर्षेषु यथाभागस्थितेषु वै । भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च ॥
तेषां विवृद्धिर्बहुला दृश्यते देवमानुषी । न शक्या परिसंख्यातुं श्रद्धेयाऽनुबुभूषता ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

आदितः श्लोकानां समष्ट्यङ्काः — ३४२२

---

अथ सप्तचत्वारिंशोऽध्यायः।

भुवनविन्यासः ।

सूत उवाच—

[illegible]व्ये हिमवतः पार्श्वे कैलासो नाम पर्वतः । तस्मिन्निवसति श्रीमान्कुबेरः सह राक्ष[illegible]
अप्सरोगणसंयुक्तो मोदते ह्यलकाधिपः ॥
कैलासपादात्संभूतं पुण्यं शीतजलं शुभम् । मन्दं नाम्ना कुमुद्वन्तं शरदम्बुदसंनिभम् ॥
तस्माद्दिव्या प्रभवति नदी मन्दाकिनी शुभा । दिव्यं च नन्दनं तत्र तस्यास्तीरे महद्वनम् ।
प्रागुत्तरेण कैलासाद्दिव्यसत्त्वौषधं गिरिम् । सुरधातुमयं चित्रं सुवर्णं पर्वतं प्रति ॥
चन्द्रप्रभो नाम गिरिः स शुद्धो रत्नसंनिभः । तस्य पादे महद्दिव्यमच्छोदं नाम तत्सरः
तस्माद्दिव्या प्रभवति ह्यच्छोदा नाम निम्नगा । तस्यास्तीरे महद्दिव्यं वनं चैत्ररथं स्मृ[illegible]
तस्मिन्गिरौ निवसति मणिभद्रः सहानुगः । यक्षसेनापतिः क्रूरगुह्यकैः परिवारितः ॥
पुण्या मन्दाकिनी चैव निम्नगाच्छोदिका तथा । महीमण्डलमध्येन प्रविष्टे ते महोदधि[illegible]
कैलासाद्दक्षिणप्राच्यां शिवसत्त्वौषधिं गुरुम् । मनःशिलामयं दिव्यं पिशङ्गं पर्वतं प्र[illegible]
लोहितो हेमशृङ्गस्तु गिरिः सूर्यप्रभो महान् । तस्य पादे महद्दिव्यं लोहितं नाम तत्सरः ।
तस्मात्पुण्यः प्रभवति लौहित्यः सदनो महान् । देवारण्यं विशोकं च तस्य तीरे महावनम्
तस्मिन्गिरौ निवसति यक्षो मणिवरो वशी । सौम्यैः सुधार्मिकैश्चैव गुह्यकैः परिवारितः ॥
कैलासाद्दक्षिणे पार्श्वे क्रूरसत्त्वौषधं गिरिम् । वृत्रकायात्किलोत्पन्नमञ्जनं त्रिककुं प्रति ॥
सर्वधातुमयस्तत्र सुमहान्वैद्युतो गिरिः । तस्य पादे सरः पुण्यं मानसं सिद्धसेवितम् ॥
तस्मात्प्रभवते पुण्या सरयूर्लोकभावनी । तस्यास्तीरे वनं दिव्यं वैभ्राजं नाम विश्रुतम् ः स्मृ[illegible]
कुबेरानुचरस्तत्र प्रहेतृतनयो वशी । ब्रह्मपातो निवसति राक्षसोऽनन्तविक्रमः [illegible]तु बुभूषता
अन्तरिक्षचरैर्घोरैर्यातुधानशतैर्वृतः ॥ [illegible] महाद्रुमः ॥

---

१ घ. °शद्वसन्ते । २ क. °न्ते याज्ञिकाः सु° । ३ ङ. °तिवत्सेरः । ४ क. °नुषीः । [illegible]
[illegible]६ ग. ङ. °न्तं सरस्तूदधिसं° । घ. °न्तं सरस्तूदधिसंप्लुतम् । त° । ७ क. सहादिव्यं । ८ ग. घ. [illegible]
[illegible]ख. ङ. क्रूरैर्गुह्य° । १० ङ. °धिं गिरिम् । म° । ११ ङ. °कटुं प्र° । १२ ग. घ. °ब्रह्मापेतो । १[illegible]

(भुवनविन्यासः)

सहस्रं तु कैलासान्मुख्यसत्त्वौषधिं गिरिम् । अरुणं पर्वतश्रेष्ठं रुक्मधातुमयं प्रति ॥ १७
...ा ह्यपितः श्रीमान्पर्वतो मेघसंनिभः । शातकुम्भमयैः शुभ्रैः शिलाजालैः समावृतः ॥ १८
...पुरुषैस्तापनीयैः शृङ्गैर्दिवमिवोल्लिखन् । सञ्जवान्स महादिव्यो दुर्गशैलो हिमाचितः ॥ १९
...रं गिरौ निवसति गिरिशो धूम्रलोहितः । तस्य पादात्प्रभवति शैलोदं नाम तत्सरः ॥ २०
...काञ्चभवते दिव्या शैलोदा नाम निम्नगा । सा चक्षुःशीतयोर्मध्ये प्रविष्टा लवणोदधिम् २१
...श तीरे वनं दिव्यं विश्रुतं सुरभीति वै । अस्त्युत्तरेण कैलासाच्छिवसत्त्वौषधो गिरिः ॥२२
...ा बाम गिरिस्तत्र हरितालमयः शुभः । हिरण्यशृङ्गः सुमहान्दिव्यो मणिमयो गिरिः ॥ २...
...यनादे महादिव्यं शुभं काञ्चनवालुकम् । रम्यं बिन्दुसरो नाम यत्र यातो भगीरथः ॥ २४
...र्यौ मित्तं राजर्षिरुवास बहुलाः समाः । दिवं यास्यन्ति मे पूर्वे गङ्गातोयपरिप्लुताः ॥ २५
...सुरपथगा देवी प्रथमं तु प्रतिष्ठिता । सोमपादप्रसूता सा सप्तधा प्रतिपद्यते ॥ २६
...णिमयास्तत्र चितयश्च हिरण्मयाः । तत्रेष्ट्वा तु गतः शैवं शक्रः सर्वैः सुरैः सह ॥ २७
...क छायापथो यस्तु अनुनक्षत्रमण्डलम् । दृश्यते भास्वरो रात्रौ देवी त्रिपथगा तु सा ॥२८
...क्षं दिवं चैव भावयन्ती भुवं गता । भवोत्तमाङ्गे पतिता संरुद्धा योगमायया॥ २९
...सर्वा स्यन्दवः केचित्क्रुद्धायाः पतिताः क्षितौ । कृतं बिन्दुसरस्तत्र ततो बिन्दुसरः स्मृतम्॥३०
...पश्चिद्धा देवी सा भवेन स्मयता किल । चिन्तयामास मनसा शंकरक्षेपणं प्रति ॥ ३१
...गृह्य विशामि पातालं स्रोतसाऽऽगृह्य शंकरम् । ज्ञात्वा तस्या अभिप्रायं क्रूरं देव्याश्चिकीर्षितम्
...तिरोभावयितुं बुद्धिरासीदङ्गेषु तां नदीम् । तस्या वलेपं तं बुद्ध्वा नद्याः क्रुद्धस्तु शंकरः ॥
...वतय तु शिरस्येनां वेगेन पतितां भुवि ॥ ३३
विहा...मेव काले तु दृष्ट्वा राजानमग्रतः । धमनीसंततं क्षीणं क्षुधापरिगतेन्द्रियम् ॥ ३४
...संस्पारोपितश्चाहं नद्यर्थं पूर्वमेव हि । बुद्ध्वाऽस्य वरदानं तु कोपं नियतवांस्तु सः ॥ ३५
...त्रेम हि वचः श्रुत्वा प्रतिज्ञाधारणं प्रति । ततो विसर्जयामास संरुद्धां स्वेन तेजसा ।
...त्र ...गीरथस्यार्थे तपसोग्रेण तोषितः ॥ ३६
तत्र ...विसृज्यमानायाः स्रोतस्तत्सप्ततां गतम् । त्रयः प्राचीमभिमुखं प्रतीचीं त्रय एव तु ॥ ३७
...स्रोतसस्तु गङ्गायाः प्रत्यपद्यत सप्तधा । नलिनी ह्लादिनी चैव पावनी चैव प्रागता ॥ ३८
...चक्षुश्च सिन्धुश्च प्रतीचीं दिशमाश्रिताः । सप्तमी त्वनुगा तासां दक्षिणेन भगीरथम् ॥
...तस्माद्भागीरथी या सा प्रविष्टा लवणोदधिम् । सप्तैता भावयन्तीह हिमाह्वं वर्षमेव तु ॥ ४...
...ताः सप्त नद्यस्ताः शुभा बिन्दुसरोद्भवाः । नानादेशान्भावयन्त्यो म्लेच्छप्रायांश्च सर्वशः ।
...गच्छन्ति ताः सर्वा यतो वर्षति वासवः । सिरिन्ध्रान्कुन्तलांश्चीनान्बर्बरान्यवसान्द्रुहान
...श्च कुणिन्दांश्च अङ्गलोकवराश्च ये । कृत्वा द्विधा सिन्धुमरुं सीताऽगात्पश्चिमोदधिम् ।
...न्तो ...व तङ्गणान्सर्वमूलिकान् । सान्ध्रांस्तुषारांस्तम्पाकान्पह्नवान्दरदाञ्छकान्
...सूत ...ः प्लावयन्ती गतोदधिम् ॥ ४...
...गान्धारान्वरपान्हृदान् । शिवपौरानिन्द्रहासान्वदातींश्च विसर्जयान् ॥ ४...

१ ख. ङ. अभ्युत्त । २ ख. ग. घ. ङ. °षधं गिरिम् । गौ° । ३ ख. ङ. °त्र गत्वा भ° । ४ ग... । ... ङ. पूर्वे । ६ ख. ग. घ. ङ. °र्वमूलि° । ७ ख. °श्रः स्राव° । ८ ख. घ. °म् । मर° ।

गन्धर्वान्रन्ध्रकरकान्भ्रमराभीररोहकान्[1] । शुनामुखांश्चोर्ध्वमनूंश्च[2] सिद्धचारणसेवितान्[3] ॥
गन्धर्वान्किन्नरान्यक्षान्रक्षोविद्याधरोरगान् । कलापग्रामकांश्चैव पारदान्सीगणान्खसान्[4] ॥
किरातांश्च पुलिन्दांश्च कुरून्सभरतानपि । पञ्चालकाशिमात्स्यांश्च मगधाङ्गास्तथैव च ॥
ब्रह्मोत्तरांश्च वङ्गांश्च तामलिप्तांस्तथैव च । एताञ्जनपदानार्यान्गङ्गा भावयते शुभान्[5] ॥
ततः प्रतिहता विन्ध्ये प्रविष्टा दक्षिणोदधिम् । ततश्चाऽऽह्लादिनी पुण्या प्राचीनाभिमुखी[6] ययौ ॥
प्लावयन्त्युपभोगांश्च निषादानां च जातयः । धीवरानृषिकांश्चैव तथा नीलमुखानपि ॥
केरलानुष्ट्रकर्णांश्च किरातानपि चैव हि । कालोदरान्विवर्णांश्च कुमारान्स्वर्णभूषितान् ॥
सा मण्डले समुद्रस्य तिरोभूताऽनुपूर्वतः । ततस्तु पावनी चैव प्राचीमेव दिशं गता ॥
अपथान्प्लावयन्तीह इन्द्रद्युम्नसरोऽपि च । तथा खरापथांश्चैव इन्द्रशङ्कुपथानपि ॥
मध्येनोद्यानमंकरान्कुथप्रावरणान्ययौ । इन्द्रद्वीपसमुद्रे तु प्रविष्टा लवणोदधिम् ॥
ततश्च नलिनी चागात्प्राचीमाशां जवेन तु । तोमरान्प्लावयन्तीह हंसमार्गान्सहूहुकान्[11] ॥
पूर्वान्देशांश्च सेवन्ती भित्त्वा सा बहुधा गिरीन् । कर्णप्रावरणांश्चैव प्राप्य चाश्वमुखानपि ॥
सिकतापर्वतमरूनगत्वा विद्याधरान्ययौ । नेमिमण्डलकोष्ठे तु प्रविष्टा सा महोदधिम् ॥
तासां नद्युपनद्यश्च शतशोऽथ सहस्रशः । उपगच्छन्ति ताः सर्वा यतो वर्षति वासवः ॥
वस्वौकसारायास्तीरे[12] तु[13] वने सुरभिविश्रुते । हरिशृङ्गे तु वसति विद्वान्कौबेरको वशी ॥
यज्ञापेतः स सुमहानमितौजाः सुविक्रमः । तत्राऽऽगस्त्यैः परिवृतो विद्वद्भिर्ब्रह्मराक्षसैः ॥
कुबेरानुचरा ह्येते चत्वारस्तत्समाः स्मृताः ॥
एवमेव तु विज्ञेया ऋद्धिः पर्वतवासिनाम् । परस्परेण द्विगुणा धर्मतः कामतोऽर्थतः ॥
हेमकूटस्य पृष्ठे तु[14] सायनं नाम तत्सरः । मनस्विनी प्रभवति तस्माज्ज्योतिष्मती च सा ॥
अवगाह्य ह्युभयतः[15] समुद्रौ पूर्वपश्चिमौ । सरो विष्णुपदं नाम निषधे पर्वतोत्तमे ॥
तस्माद्द्वयं प्रभवति गान्धर्वी नन्वली[16] च या । मेरोः पश्चात्प्रभवति ह्रदश्चन्द्रप्रभो महान् ॥
तत्र जाम्बूनदी पुण्या यस्यां जाम्बूनदं शुभम् । पयोदं तु सरो नीले सुशुभ्रं पुण्डरीकवत् ॥
पुण्डरीका पयोदा च तस्मान्नद्यौ विनिर्गते । श्वेतात्प्रभवते पुण्यं सरस्तूत्तरमानसम् ॥
ज्योत्स्ना च मृगकान्ता च तस्माद्द्वे संबभूवतुः । मधुमत्सरैः[17] पुण्यं च पद्ममीनद्विजाकुलम् ।
कल्पवृक्षसमाकीर्णं मधुवत्सर्वतः सुखम् । रुद्रकान्तमिति ख्यातं निर्मितं तद्भवेन तु ॥
अन्ये चाप्यत्र विख्याताः पद्ममीनद्विजाकुलाः । नाम्ना[18] ह्रदा जया नाम द्वादशोदधिसंनिभाः ॥
तेभ्यः[19] शान्ती च माध्वी च द्वे नद्यौ संबभूवतुः । यानि किंपुरुषाद्यानि तेषु देवो न वर्षति ॥
उद्भिज्जान्युदकान्यत्र प्रवहन्ति सरिद्वराः । ऋषभो दुन्दुभिश्चैव धूम्रश्चैव महागिरिः ॥
पूर्वायता महाभागा निम्नगा लवणाम्भसि । चन्द्रकङ्कस्तथा प्राणो महानग्निः शिलोच्चयः ॥
उदग्याता उदीच्या[20]न्तो[21] अवगाढा महोदधिम् ॥

१ घ. °न्ध्रवर° । २ ख. घ. ङ. °मटाभी । ३ ख. घ. ङ. °मरून्सिन्धुरेताक्षिपेवते । ग° । ... °ताङ्गणा° । ५ ख. ग. घ ङ. भा । त° । ६ ख. घ. ङ. मिगुला य । ७ ख. ग. घ. °ला नोष्ट ... णमारीस्व° । ९ क. °थान्भाव° । १० क. °मस्कारा° । ११ क. °रान्भाव° । १२ ख. ग. घ. ... रिसु° । १४ ख. तु अक्षदंना° । १५ ख. ग. घ. ङ. °गाढे सु° । १६ क. नन्वली । १७ ... °रः प्रकुरुषु प° । १८ क. °म्राघ्राज° । १९ क. शान्ता च । २० ग. °दीच्यां ते देवा ... वगाऽऽप प म° ।

सहस्र

[illegible] वराहश्च नारदश्च महीधरः। प्रतीचीमायतास्ते वै प्रविष्टा लवणोदधिम् ॥ ७४
पुरुषैंठाहकश्चैव मैनाकश्चैव पर्वतः। आयतास्ते महाशैलाः समुद्रं दक्षिणं प्रति ॥
[illegible] मैनाकयोर्मध्ये विदिशं दक्षिणं प्रति ॥ ७५
[illegible]र्तको नाम सोऽग्निः पिबति तज्जलम्। नाम्ना समुद्रपः श्रीमानौर्वः स वडवामुखः ॥
[illegible] प्रविष्टा हि पर्वता लवणोदधिम्। महेन्द्रभयवित्रस्ताः पक्षच्छेदभयात्तदा ॥
[illegible]यते चन्द्रे श्वेते कृष्णशशाकृति ॥ ७७
[illegible] तु वर्षस्य भेदास्ते नव कीर्तिताः। इहोदितस्य दृश्यन्ते तथाऽन्येऽन्यत्र नोदिते ॥ ७८
[illegible]रमेतेषां वर्षमुद्दिश्य ते गुणैः। आरोग्यायुष्प्रमाणाभ्यां धर्मतः कामतोऽर्थतः ॥ ७९
[illegible]तानि भूतानि गुणैरेतैस्तु भागशः। वसन्ति नानाजातीनि तेषु वर्षेषु तानि वै ॥
[illegible]धारयतसर्वं पृथ्वी विश्वं जगत्स्थितौ ॥ ८०

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ३५०२

अथाष्टचत्वारिंशोऽध्यायः।

भुवनविन्यासः।

सूत उवाच—

[illegible] वर्षस्य भारतस्य निबोधत। दशयोजनसाहस्रं समतीत्य महार्णवम् ॥ १
[illegible]तु सहस्राणि योजनानां समायतम्। अतस्त्रिभागविस्तीर्णं नानापुष्पफलोदयम् ॥ २
[illegible] तं महाशैलं तत्रैकं कुलपर्वतम्। येन कूटतटैर्नैकैस्तद्द्वीपं समलंकृतम् ॥ ३
[illegible]ादुसलिलास्तत्र नद्यः सहस्रशः। वाप्यस्तस्य तु द्वीपस्य प्रवृत्ता विमलोदकाः ॥ ४
[illegible]लस्य च्छिद्रेषु विस्तीर्णेष्वायतेषु च। अनेकेषु समृद्धानि नानाकाराणि सर्वशः ॥ ५
[illegible]सम्पाढ्यानि मुदितानि महान्ति च। तेषां तलप्रवेशानि सहस्राणि शतानि च ॥ ६
[illegible] संनिविष्टानि पर्वतान्तर्गतानि च। सुसंबद्धानि चान्योन्यमेकद्वाराणि तान्यथ ॥ ७
[illegible]श्मश्रुधरात्मनो नीला मेघसमप्रभाः। जालमात्राः प्रजास्तत्र अशीतिपरमायुषः ॥ ८
[illegible]मृगसधर्माणः फलमूलाशिनस्तथा। गोधर्माणो ह्यनिर्दिष्टाः शौचाचारविवर्जिताः ॥
[illegible]पं तादृशैः पूर्णं मनुजैः क्षुद्रमानुषैः। एवमेतेऽन्तरद्वीपा व्याख्याता अनुपूर्वशः ॥ १०
[illegible]श्च पञ्चाशत्पञ्चशीतिः शतं तथा। सहस्रमपि चाप्युक्तं योजनानां समन्ततः ॥ ११
[illegible]ऽप्यताश्चैव नानासत्त्वसमाकुलाः। बर्हिणद्वीपपर्वाणि क्षुद्रद्वीपाः सहस्रशः ॥ १२

* इदमर्धं नास्ति घ. पुस्तके।

[illegible] १ [illegible]र्को। २ क. °क्षिणां प्र°। ३ ख. कृष्णं श°। ४ क. °कृतिः। भा°। ५ ख. घ. °मुद्दिच्यते। [illegible] ७ ग. ङ. °जातानि। ८ क. °स्थिता। इ°। ख ङ. °स्थिताः। इ°। ९ ख. ग. घ. °शः। [illegible]शः। °ायिनस्तस्यद्वी°। १० ख. सहस्राणि। ११ ख. घ. ङ. °पां तिल°। १२ ख. नीलमे°।

जम्बूद्वीपप्रदेशास्तु षडन्ये विविधाश्रयाः । अत्र द्वीपाः समाख्याता नानारत्नाकराः क्षि
अङ्गद्वीपं यमद्वीपं मलयद्वीपमेव च । *शङ्खद्वीपं कुशद्वीपं वराहद्वीपमेव च ॥
अङ्गद्वीपं निबोध त्वं नानासंघसमाकुलम् । नानाम्लेच्छगणाकीर्णं तद्द्वीपं बहुविस्तरम् ॥
मविद्रुमपूर्णानां रत्नानामाकरं क्षितौ । नदीशैलवनैश्चित्रं संनिभं लवणाम्भसा ॥
चक्रगिरिर्नाम नैकनिर्झरकन्दरः । तत्र सा तु दरी चास्य नानासत्त्वसमाश्रया ॥
मध्ये नागदेशस्य नैकदेशो महागिरिः । कोटिशां नागनिलयं प्राप्तो नदनदीपतिम् ॥
द्वीपमिति प्रोक्तं नानारत्नाकराचितम् । ( +तत्रापि द्युतिमान्नाम पर्वतो धातुमण्डितः ।
समुद्रगानां(णां) प्रभवः प्रभवः काञ्चनस्य तु ॥
थैव मलयद्वीपमेवमेव सुसंवृतम् । ) मणिरत्नाकरं स्फीतमाकरं कनकस्य च ॥
आकरं चन्दनानां च समुद्राणां तथाऽऽकरम् । नानाम्लेच्छगणाकीर्णं नदीपर्वतमण्डितम् ।
तत्र श्रीमांस्तु मलयः पर्वतो रजताकरः । महामलय इत्येवं विख्यातो वरपर्वतः ॥
द्वितीयं मन्दरं नाम प्रथितं च सदा क्षितौ । +नानापुष्पफलोपेतं रम्यं देवर्षिसेवितम्
अगस्त्यभवनं तत्र देवासुरनमस्कृतम् ॥
तथा काञ्चनपादस्य मलयस्यापरस्य हि । निकुञ्जैस्तृणसोमाङ्कैराश्रमं पुण्यसेवितम् ।
नानापुष्पफलोपेतं स्वर्गादपि विशिष्यते । तत्रावतरते स्वर्गः सदा पर्वसु पर्वसु ॥
तथा त्रिकूटनिलये नानाधातुविभूषिते । अनेकयोजनोत्सेधे चित्रसानुदरीगृहे ॥
तस्य कूटतटे रम्ये हेमप्राकारतोरणा । निर्यूहवलभी चित्रा हर्म्यप्रासादमालिनी ॥
शतयोजनविस्तीर्णा त्रिंशदायामयोजना । नित्यप्रमुदिता स्फीता लङ्का नाम महापुरी ॥
सा कामरूपिणां स्थानं राक्षसानां महात्मनाम् । आवासो बलदृप्तानां तद्विद्यादेवविद्विषाम्
मानुषाणामसंबाधा दुर्गम्या सा महापुरी ॥
तस्य द्वीपस्य वै पूर्वे तीरे नदनदीपतेः । गोकर्णनामधेयस्य शंकरस्याऽऽलयं महत् ॥
कङ्कस्तु दशमस्तत्र पर्वतः सुमहांस्ततः । द्विध्द्वयोजनविस्तीर्णं नानाम्लेच्छगणालयम् ॥
षष्ठस्तु पर्वतस्तत्र महिषो मेघसंनिभः । यस्मिन्सोऽग्निर्निवसति पुण्यकृद्भिर्निषेवितः ॥
सप्तमः पर्वतस्तत्र ककुद्मान्नाम भाष्यते । तत्र रत्नान्यनेकानि स्वयं व्रजः कृतालयः
प्रजापतिमुपादाय प्राजापत्ये विधिः स्वयम् ॥ शिवम्
इत्येते पर्वताः सप्त शाल्मले मणिभूषिताः । तेषां वर्षाणि वक्ष्यामि सप्तैव तु शुभानि वै ॥
कुमुदात्प्रथमं श्वेतमुन्नतस्य तु लोहितम् ॥
बलाहकस्य जीमूतं द्रोणस्य हरितं स्मृतम् । कङ्कस्य वैद्युतं नाम महिषस्य तु मानसम् ॥
ककुदः सुप्रभं नाम सप्तैतानि तु सप्तधा । वर्षाणि पर्वतांश्चैव नदीस्तेषु निबोधत ॥
योनीतोया वितृष्णा च चन्द्रा शुक्रा विमोचनी । निवृत्तिः सप्तमी तासां प्रतिवर्षं तु ताः स्मृ
तासां समीपगाश्चान्याः शतशोऽथ सहस्रशः । अशक्याः परिसंख्यातुं श्रद्धेयास्तु बुभूषता
इत्येष संनिवेशो वः शाल्मलस्यापि कीर्तितः । प्लक्षद्वक्षेण संख्यातस्तस्य मध्ये महाद्रुमः ॥

---

१ ख. °न्तरेषु । २ ख. घ. ५. °लं तु नि° । ३ ग. घ. ङ. °पि सर्वतः स° । ४
५ क. विधिस्स्वय° । ६ ङ. °मुत्तरस्य । ७ घ. ङ. °लाकस्य तु जी° । ८ ख. घ. ङ. °प्रभा । ९

सहते कथिता अनुद्वीपाः समन्ततः । भारतद्वीपदेशो वै दक्षिणे बहुविस्तरः ॥ ४१
[illegible]ा मेदं वर्षं बहुद्वीपमिहोच्यते । समुद्रजलसंभिन्नं खण्डं खण्डीकृतं स्मृतम् ॥ ४२
[illegible]पुष्करमहाद्वीपः सान्तरद्वीपमण्डितः । सानुद्वीपः समाख्यातो जम्बूद्वीपस्य विस्तरः ॥ ४३

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५४६

---

अथैकोनपञ्चाशत्तमोऽध्यायः ।

---

भुवनविन्यासः ।

सूत उवाच—

[illegible]ऽहं प्रवक्ष्यामि यथावदिह संग्रहात् । शृणुतेमं यथातत्त्वं ब्रुवतो मे द्विजोत्तमाः ॥ १
[illegible] य विस्ताराद्द्विगुणस्तस्य विस्तरः । विस्तारात्त्रिगुणश्चास्य परिणाहः समन्ततः ॥
[illegible] समुद्रोऽयं द्वीपेन लवणोदकः ॥ २
[illegible] जनपदाश्चिराच्च म्रियते प्रजा । कुत एव हि दुर्भिक्षं जराव्याधिभयं कुतः ॥ ३
[illegible] पर्वताः शुभ्राः सप्तैव मणिभूषणाः । रत्नाकरास्तथा नद्यस्तासां नामानि वक्ष्यते(क्ष्यहम्)
[illegible]पादिषु त्वेषु सप्त सप्तसु सप्तसु । ऋज्वायताः प्रतिदिशं निविष्टाः पर्वताः सदा ॥ ५
[illegible]ीपे तु वक्ष्यामि सप्तद्वीपान्महाचलान् । गोमेदकोऽत्र प्रथमः पर्वतो मेघसंनिभः ॥
[illegible]पते तस्य नाम्ना वै वर्षं गोमेदकं तु तत् ॥ ६
[illegible] पर्वतश्चन्द्रः सर्वौषधिसमन्वितः । अश्विभ्याममृतस्यार्थे ओषध्यस्तत्र संस्थिताः ॥ ७
[illegible] नारदो नाम दुर्गशैलो महोच्छ्रयः । तत्राचले समुत्पन्नौ पूर्वं नारदपर्वतौ ॥
[illegible]त्र वै शैलो दुन्दुभिर्नाम नामतः । शब्दमृत्यु[illegible]रा तस्मिन्दुन्दुभिस्ताडितः सुरैः ॥
[illegible]रो रज्जुमयः शाल्मलश्चासुरान्तकृत् ॥ ९
[illegible]मको नाम देवैर्यत्रामृतं पुरा । संभृतं च हृतं चैव मातुरर्थे गरुत्मता ॥ १०
[illegible] सुमना नाम स एवर्षभ उच्यते । हिरण्याक्षो वराहेण तस्मिञ्छैले निषूदितः ॥ ११
[illegible]जः सप्तमस्तत्र भ्राजिष्णुः स्फाटिको महान् । यस्माद्विभ्राजतेऽर्चिर्भिर्वैभ्राजस्तेन स स्मृतः
[illegible] वर्षाणि वक्ष्यामि नामतस्तु यथाक्रमम् । गोमेदं प्रथमं वर्षं नाम्ना शान्तभयं स्मृतम् ।
[illegible]चन्द्रस्य शिखरं नाम नारदस्य सुखोदयम् । आनन्दं दुन्दुभेर्वर्षं सोमकस्य शिवं स्मृतम् ॥
[illegible]मृक्षमृषभस्यापि वैभ्राजस्य ध्रुवं तथा ॥ १४
[illegible]देवगन्धर्वाः सिद्धाश्च सह चारणैः । विहरन्ति रमन्ते च दृश्यमानास्तु तैः सह ॥ १५
[illegible]यश्च सप्तैव प्रतिवर्षं समुद्रगाः । नामतस्ताः प्रवक्ष्यामि सप्त गङ्गा महानदीः ॥ १६
[illegible]रा सुतप्तैव निष्पापा मुदिता ऋतुः । अमृता सुकृता चैव सप्तैताः सरितां वराः) ॥
[illegible]न्ति ता नद्यस्ताभ्यश्चान्याः सहस्रशः । बहूदकाश्चौघवत्यो यतो वर्षति वासवः ॥

---

* धनुश्चिहान्तर्गतग्रन्थः क. पुस्तके नास्ति ।

[illegible] घ. ङ. ग. ङ. °जातानि । ८ क. °स्थिता । इ° । ख ङ. °स्थि[illegible] ग.ङ.°नदी । अ° ।
[illegible]°शः । °पायिनस्तस्यद्वी° । १० ख. सहस्राणि । ११ ख. घ.

...ाः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते । शुभाः शान्तवहाश्चैव प्रमोदा ये च ते ।
आनन्दाश्च ध्रुवाश्चैव क्षेमकाश्च शिवैः सह । वर्णाश्रमाचारयुक्ताः प्रजास्तेष्वथ सर्वशः ।
सर्वेष्वरोगाः सुबलाः प्रजास्त्वामयवर्जिताः । अधःसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी
न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित् । त्रेतायुगसमः कालः सर्वदा तत्र वर्तते ।
प्लक्षद्वीपादिषु ज्ञेयः पञ्चस्वेतेषु सर्वशः । देशस्यानुविधानेन कालस्यानुविधाः स्मृताः ॥
...श्च वर्षसहस्राणि तेषु जीवन्ति मानवाः । सुरूपाश्च सुवेषाश्च अरोगा बलिनस्तथा ॥
सुखमायुर्बलं रूपमारोग्यं धर्म एव च । प्लक्षद्वीपादिषु ज्ञेयं शाकद्वीपान्तकेषु च ॥
प्लक्षद्वीपः पृथुः श्रीमान्सर्वतोधनधान्यवान् । दिव्यौषधिफलोपेतः सर्वौषधिवनस्पतिः ॥
आवृतः पशुभिः सर्वैर्ग्राम्या(म्या)रण्यैः सहस्रशः । जम्बूवृक्षेण संख्यातस्तस्य मध्ये द्विजोत्त...
प्लक्षो नाम महावृक्षस्तस्य नाम्ना स उच्यते ॥
स तत्र पूज्यते स्थाणुर्मध्ये जनपदस्य हि । स चापीक्षुरसोदेशः प्लक्षद्वीपसमावृतः॥
प्लक्षद्वीपस्य चैवेह वैपुल्याद्विस्तरेण तु । इत्येष संनिवेशो वः प्लक्षद्वीपस्य कीर्तितः ॥
आनुपूर्व्या समासेन शाल्मलं तं निबोधत ॥
ततस्तृतीयं द्वीपानां शाल्मलं द्वीपमुत्तमम् । शाल्मलेन समुद्रस्तु द्वीपेनेक्षुरसोदकः
प्लक्षद्वीपस्य विस्ताराद्द्विगुणेन समावृतः ॥
तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः । रत्नाकरास्तथा नद्यस्तेषु वर्षेषु सप्तसु॥
प्रथमः सूर्यसंकाशः कुमुदो नाम पर्वतः । सर्वधातुमयैः शृङ्गैः शिलाजालसमुद्गतैः ॥
द्वितीयः पर्वतस्तस्य उन्नतो नाम विश्रुतः । हरितालमयैः शृङ्गैर्दिवमावृत्य तिष्ठति ॥
तृतीयः पर्वतस्तस्य बलाहक इति श्रुतः । जात्यञ्जनमयैः शृङ्गैर्दिवमावृत्य तिष्ठति ॥
चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महाबलाः । विशल्यकरणी चैव मृतसंजीवनी तथा ॥
कङ्कस्तु दशमस्तत्र पर्वतः सुमहोदयः । दिव्यपुष्पफलोपेतो वृक्षवीरुत्समावृतः ॥
षष्ठस्तु पर्वतस्तत्र महिषो मेघसंनिभः । यस्मिन्सोऽग्निर्निवसति महिषो नाम वारिजः ॥
सप्तमः पर्वतस्तत्र ककुद्मान्नाम भाष्यते । तत्र रत्नान्यनेकानि स्वयं वर्षति वासवः ॥
प्रजापतिमुपादाय प्राजापत्ये विधिः स्वयम् ॥
इत्येते पर्वताः सप्त शाल्मले मणिभूषिताः । तेषां वर्षाणि वक्ष्यामि सप्तैव तु शुभानि वै ॥
कुमुदात्प्रथमं श्वेतमुन्नतस्य तु लोहितम् ॥
बलाहकस्य जीमूतं द्रोणस्य हरितं स्मृतम् । कङ्कस्य वैद्युतं नाम महिषस्य तु मानसम् ॥
ककुदः सुप्रभं नाम सप्तैतानि तु सप्तधा । वर्षाणि पर्वतांश्चैव नदीस्तेषु निबोधत ॥
धौनीतोया वितृष्णा च चन्द्रा शुक्रा विमोचनी । निवृत्तिः सप्तमी तासां प्रतिवर्षं तु ताः स्मृ...
तासां समीपगाश्चान्याः शतशोऽथ सहस्रशः । अशक्याः परिसंख्यातुं श्रद्धेयास्तु बुभूषता
इत्येष संनिवेशो वः शाल्मलस्यापि कीर्तितः । प्लक्षवृक्षेण संख्यातस्तस्य मध्ये महाद्रुमः ॥

---

१ ख. °न्तरेषु । २ ख. घ. ५. °लं तु नि° । ३ ग. घ. ङ. °पि सर्वतः स° । ४ ...
५ क. विधिस्स्वय° । ६ ङ. °मुत्तरस्य । ७ घ. ङ. °लाकस्य तु जी° । ८ ख. घ. ङ. °प्रभा । ९ ...

...विपुलस्कन्धस्तस्य नाम्ना स उच्यते । शाल्मलिस्तु समुद्रेण सुरोदेन समन्ततः ॥ ४१
...च्छाल्मलस्यैव समेन तु समन्ततः ॥ ४२
...तु धर्मज्ञा द्वीपेषु शृणुत प्रजाः । यथाश्रुतं यथान्यायं ब्रुवतो मे निबोधत ॥ ४३
...ं प्रवक्ष्यामि चतुर्थं तं समासतः । सुरोदकः परिवृतः कुशद्वीपेन सर्वतः ॥ ४४
...गिरयस्तत्र वर्ण्यमानान्निबोधत । शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः ॥ ४५
...पे तु विज्ञेयः पर्वतो विद्रुमोच्चयः । द्वीपस्य प्रथमस्तस्य द्वितीयो हेमपर्वतः ॥ ४६
...द्युतिमान्नाम जीमूतसदृशो गिरिः । चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः ॥ ४७
...हरिगिरिर्नाम सप्तमो मन्दरः स्मृतः । मन्दा इति ह्यपां नाम मन्दरो दारणादपाम् ॥ ४८
...तरविष्कम्भो द्विगुणः परिवारितः । उद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम् ॥ ४९
...स्वैरथाकारं चतुर्थं लवणं स्मृतम् । पञ्चमं धृतिमद्वर्षं षष्ठं वर्षं प्रभाकरम् ॥ ५०
...पिलं नाम सप्तैते वर्षपर्वताः ॥ ५१
...गन्धर्वाः प्रभासु जगदीश्वराः । विहरन्ति रमन्ते च दृश्यमानास्तु सर्वशः ॥ ५२
...यवः सन्ति म्लेच्छजात्यस्तथैव च । गौरप्रायो जनः सर्वः क्रमाच्च म्रियते तथा ॥ ५५
...स्यः सप्तैव धुतपापाः शिवास्तथा । पवित्रा संततिश्चैव द्युतिगर्भा मही तथा ॥ ५६
...र्ताभ्योऽपरिज्ञाताः शतशोऽथ सहस्रशः । अभिगच्छन्ति ताः सर्वा यतो वर्षति वासवः ॥ ५७
...लेदेन कुशद्वीपो बाह्यतः परिवारितः । विज्ञेयः स तु विस्तारात्कुशद्वीपसमेन तु ॥ ५८
...संनिवेशो वः कुशद्वीपस्य वर्णितः । क्रौञ्चद्वीपस्य विस्तारं वक्ष्याम्यहमतः परम् ॥ ५९
...पस्य विस्ताराद्द्विगुणः स तु वै स्मृतः । घृतोदकसमुद्रो वै क्रौञ्चद्वीपेन संवृतः ॥ ६०
...पे नगश्रेष्ठः क्रौञ्चस्तु प्रथमो गिरिः । क्रौञ्चात्परो वामनको वामनादन्धकारकः ॥ ६१
...त्परश्चापि दिवावृन्नाम पर्वतः । दिवावृतः परश्चापि दिविन्दो गिरिरुच्यते ॥ ६२
...परतश्चापि पुण्डरीको महागिरिः । पुण्डरीकात्परश्चापि प्रोच्यते दुन्दुभिस्वनः ॥ ६३
...मयाः सप्त क्रौञ्चद्वीपस्य पर्वताः । बहुवृक्षफलोपेता नानावृक्षलतावृताः ॥ ६४
...ण द्विगुणा विष्कम्भाद्वर्षपर्वताः । वर्षाणि तत्र वक्ष्यामि नामतस्तु निबोधत ॥ ६५
...स्य कुशलो देशो वामनस्य मनोनुगः । मनोनुगात्परश्चोष्णस्तृतीयो देश उच्यते ॥ ६६
...त्परः प्रावरकः प्रावरादन्धकारकः । अन्धकारकदेशात्तु मुनिदेशः परः स्मृतः ॥ ६७
...देशात्परश्चैव प्रोच्यते दुन्दुभिस्वनः । सिद्धचारणसंकीर्णो गौरप्रायो जनः स्मृतः ॥ ६८
...पि नद्यः सप्तैव प्रतिवर्षं स्मृताः शुभाः । गौरी कुमुद्वती चैव संध्या रात्रिर्मनोजवा ॥ ६९
...तिश्च पुण्डरीका च गङ्गा सप्तविधा स्मृता ॥ ७०
...सप्तसुद्गाश्चान्या नद्यो यास्तु समीपगाः । अनुगच्छन्ति ताः सर्वा विपुलाः सुबहूदकाः ॥
...द्वीपः समुद्रेण दधिमण्डोदकेन तु । आवृतः सर्वतः श्रीमान्क्रौञ्चद्वीपसमेन तु ॥ ७१
...द्वीपादयो ह्येते समासेन प्रकीर्तिताः । तेषां निसर्गो द्वीपानामानुपूर्व्येण सर्वशः ॥ ७२
...क्यं विस्तराद्वक्तुमपि वर्षशतैरपि । निसर्गोऽयं प्रजानां तु संहारो यश्च तासु वै ॥ ७३

...° । ...° । २ ख. ग. ङ. तथाऽपि । ३ ग. ङ. °तिदर्भा° । घ. °तिर्दम्भा । ४ क. °स्ताभ्यः प°

अत ऊर्ध्वं प्रवक्ष्यामि शाकद्वीपस्य यो विधिः । शाकद्वीपस्य कृत्स्नस्य यथावदिह निश्च
शृणुध्वं वै यथातत्त्वं ब्रुवतो मे यथार्थवत् ॥
क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः । परिवार्य समुद्रं स दधिमण्डोदकं स्थितः
तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः । कुत एव तु दुर्भिक्षं जराव्याधिभयं कुतः ॥
तत्रापि पर्वताः शुभ्राः सप्तैव परिभूषिताः । रत्नाकरास्तथा नद्यस्तासां नामानि मे शृणु ॥
देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते । प्रागायतः ससौवर्ण उदयो नाम पर्वतः ॥
तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्ति च यान्ति च । तस्यापरेण सुमहाञ्जलधारो महागिरिः ॥
तस्मान्नित्यमुपादत्ते वासवः परमं जलम् । ततो वर्षं प्रभवति वर्षाकाले प्रजास्विह ॥
तस्यापरे रैवतको यत्र नित्यं प्रतिष्ठितः । रेवती दिवि नक्षत्रं पितामहकृतो गिरिः ॥
तस्यापरेण सुमहाञ्श्यामो नाम महागिरिः । तस्माच्छ्यामत्वमापन्नाः प्रजाः पूर्वमिमाः
तस्यापरेण रजतो महानस्तो गिरिः स्मृतः । तस्यापरेणाऽऽम्बिकेयो दुर्गः शैलो हिम
आम्बिकेयात्परो रम्यः सर्वौषधिसमन्वितः । स चैव केशरीत्युक्तो यतो वायुः प्रवा
शृणुध्वं नामतस्तानि यथावदनुपूर्वशः । उदयस्योदयं वर्षं जलदं नाम विश्रुतम् ॥
द्वितीयं जलधारस्य सुकुमारमिति स्मृतम् । रैवतस्य तु कौमारं श्यामस्य तु मणीचक
अस्तस्यापि शुभं वर्षं विज्ञेयं कुसुमोत्तरम् । आम्बिकेयस्य मोदाकं केसरेषु महाद्रुमम् ॥
द्वीपस्य परिमाणं च ह्रस्वदीर्घत्वमेव च । शाकद्वीपेन विख्यातस्तस्य मध्ये वनस्पतिः ॥
शाको नाम महावृक्षस्तस्य पूजां प्रयुञ्जते ॥
तेन देवगन्धर्वाः सिद्धाश्च सह चारणैः । विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह ॥
तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः । तेषु नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः ॥
विद्धि नाम्नश्च(म्ना च) ताः सर्वा गङ्गास्ताः सप्तधा स्मृताः ॥
प्रथमा सुकुमारीति गङ्गा शिवजला तथा । अनुतप्ता च नाम्नैव नदी संपरिकीर्तिता ॥
कुमारी नामतः सिद्धा द्वितीया सा पुनः सती । नन्दा च पार्वती चैव तृतीया परिकीर्ति
शिवेतिका चतुर्थी स्यात्त्रिदिवा च पुनः स्मृता । इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः क्रतुः
वेनुका च स्मृता चैव षष्ठी संपरिकीर्तिता । एताः सप्त महागङ्गाः प्रतिवर्षं शिवोदकाः ॥
भावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् ॥
अनुगच्छन्ति तास्त्वन्या नदीर्नद्यः सहस्रशः । बहूदकपरिस्रावा यतो वर्षति वासवः ॥
तासां तु नामधेयानि परिमाणं तथैव च । न शक्यं परिसंख्यातुं पुण्यास्ताः सरिदुत्तमाः ॥
ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ।
शिंशपायन विस्तीर्णो द्वीपोऽसौ चक्रसंस्थितः । नदीजलैः प्रतिच्छन्नः पर्वतैश्चाभ्रसंनिभैः ॥
सर्वधातुविचित्रैश्च मणिविद्रुमभूषितैः । पुरैश्च विविधाकारैः स्फीतैर्जनपदैरपि ॥
वृक्षैः पुष्पफलोपेतैः समन्ताद्धनधान्यवान् । क्षीरोदेन समुद्रेण सर्वतः परिवारितः ॥
शाकद्वीपस्तु विस्तारात्समेन तु समन्ततः ॥

१ क. °ष्ठिता । रे° । २ ख. घ. ङ. ... ५ ख. ग. °स्याथार्न ६ क. पुष्करे । ७ क. °मानि ... घ. ङ. सजडपण्डि° । ११ ...
... ङ. नाम्न्यश्च । ६ ङ. पर्वती । ... ख. ग. घ. ङ. °सतिः । ...

...पदाः पुण्याः पर्वतान्तरिते शुभाः । वर्णाश्रमसमाकीर्णा देशास्ते सप्त वै स्मृताः ॥
...श्च तेष्वस्ति वर्णाश्रमकृतः क्वचित् । धर्मस्य चाव्यभीचारादेकान्तसुखिताः प्रजाः ॥
...लोभो माया वा ईर्ष्याऽसूयाऽभृतिः कुतः । विपर्ययो न तेष्वस्ति एतत्स्वाभाविकं स्मृतम् ।
...तेर्न तेष्वास्ति न दण्डो न च दण्डकाः । स्वधर्मेणैव धर्मज्ञास्ते रक्षन्ति परस्परम् ॥
...व शक्यं वै तस्मिन्द्वीपे निवासिनाम् । पुष्करं सप्तमं द्वीपं प्रवक्ष्यामि निबोधत ॥ १०
...तु द्वीपेन वृतः क्षीरोदको बहिः । शाकद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ॥ १०
...पर्वतः श्रीमानेक एव महाशिलः । चित्रैर्मणिमयैः शैलैः शिखरैस्तु समुच्छ्रितैः ॥ १०
...तरार्धतस्य पूर्वार्धे चित्रसानुः स्थितो महान् । परिमण्डलसहस्राणि विस्तीर्णः पञ्चविंशतिः ॥
...व चतुस्त्रिंशत्सहस्राणि समाचितः । द्वीपार्धस्य परिस्तोमः पर्वतो मानसोत्तमः ॥ १०८
...लासमीपे तु नवचन्द्र इवोदितः । योजनानां सहस्राणि ऊर्ध्वं पञ्चाशदुच्छ्रितः ॥ १०९
...विस्तीर्णः सर्वतःपरिमण्डलः । स एवं द्वीपपश्चार्धे मानसः पृथिवीधरः ॥ ११०
...हासानुः संनिवेशाद्द्विधा कृतः । स्वादूदकेनोदधिना सर्वतः परिवारितः ॥ १११
...स्ताराद्विस्तीर्णोऽसौ समन्ततः । तस्मिन्द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ।
...मानसस्याथ पर्वतस्यानुमण्डलौ ॥ ११२
...त तु यद्वर्षं बाह्यतो मानसस्य तत् । तस्यैवाभ्यन्तरे यत्तु धातकीखण्डमुच्यते ॥ ११३
...र्षसहस्राणि तत्र जीवन्ति मानवाः । आरोग्यसुखभूयिष्ठा मानसीं सिद्धिमास्थिताः ॥ ११४
...ायुश्च रूपं च तस्मिन्वर्षद्वये स्थितम् । अधमोत्तमौ न तेष्वास्तां तुल्यास्ते रूपशीलतः ॥
...वधको नेर्ष्या न स्तेया(यं) न भयं तथा । निग्रहो न च दण्डोऽस्ति न लोभो न परिग्रहः
...न तत्रास्ति धर्माधर्मौ तथैव च । वर्णाश्रमाणां वार्ता वा पाशुपाल्यं वणिक्क्रिया
...धा दण्डनीतिः शुश्रूषा शल्यमेव च । वर्षद्वये सर्वमेतत्पुष्करस्य न विद्यते ॥ ११
...नद्यो वर्षं च शीतोष्णं वा न विद्यते । उद्भिज्जान्युदकान्यत्र गिरिप्रश्र(स्र)वणानि च
...णां कुरूणां च तुल्यकालो जनः सदा । सर्वत्र सुसुखस्तत्र जराक्लमविवर्जितः ॥ १२
...धातकीखण्डे महावीते तथैव च । आनुपूर्व्याद्विधिः कृत्स्नः पुष्करस्य प्रकीर्तितः ॥ १२
...दकेनोदधिना पुष्करः परिवारितः । विस्तारान्मण्डलाच्चैव पुष्करस्य तथैव च ॥ १२
...व द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । द्वीपस्यानन्तरो यस्तु समुद्रस्तत्समस्तु सः ॥ १२
...वं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परात् । अपां चैव समुद्रेकात्समुद्र इति संज्ञिताः ॥ १२४
...षयो निवसन्त्यस्मिन्प्रजा यस्माच्चतुर्विधाः । तस्माद्वर्षमिति प्रोक्तं प्रजानां सुखदं तु तत् ।
...ां ष इत्येव ऋषिणो वृषः शक्तिप्रबन्धने । रतिप्रबन्धनात्सिद्धं वर्षत्वं तेन तेषु तत् ॥ १२
...वर्धाक्लपक्षे चन्द्रवृद्धौ समुद्रः पूर्यते सदा । प्रक्षीयमाणे बहुले क्षीयतेऽस्तमिते खगे ॥ १
...ीयापूर्यमाण उदधिः स्वत एवाभिपूर्यते । ततोऽपक्षीयमाणेऽपि स्वात्मनैवापकृष्यते ॥ १२

१ ख. °रिताः शु° । २ ङ. °ष्कर: स । ३ ख. ग. घ. °रे सर्व° । ४ ग. घ. ङ. °धे मित्र° । ५ ख. ग. ...°वाः । अरोगाः सु° । ६ ङ. °णिक्कथा । त्र° । ७ ख. °प्रावि ... ङ. वा° । ९ क खण्डो म° । १० ...त्रा° । ...याप° ... तिदर्भा... । ... क. °ने । इ° । १४ क. ङ. तदा । १५

…स्थालीस्थमग्निसंयोगाज्जलमुद्रिच्यते यथा । तथा महोदधिगतं तोयमुद्रिच्यते ततः ॥
अन्यूना ह्यतिरिक्ताश्च वर्धन्त्यापो ह्रसन्ति च । उदयास्तमितेश्चेन्दोः पक्षयोः शुक्लकृष्णयोः
क्षयवृद्धिरेवमुदधेः सोमवृद्धिक्षयात्पुनः ॥
…शोत्तराणि पञ्चैव अङ्गुलीनां शतानि तु । अपां वृद्धिः क्षयो दृष्टः समुद्राणां तु पर्वसु ॥
…रापत्वात्स्मृता द्वीपाः सर्वतश्चोदकावृताः । उदकस्योऽऽधानं यस्मात्तस्मादुदधिरुच्यते
…पर्वाणस्तु गिरयः पर्वभिः पर्वताः स्मृताः । प्लक्षद्वीपे तु गोमेदः पर्वतस्तेन चोच्यते ॥
…ल्मलिः शाल्मलद्वीपे पूज्यते च महाद्रुमः । कुशद्वीपे कुशस्तम्बस्तस्य नाम्ना स उच्यते
…क्रौञ्चद्वीपे गिरिः क्रौञ्चो मध्ये जनपदस्य ह । शाकद्वीपे द्रुमः शाकस्तस्य नाम्ना स उ…
…न्यग्रोधः पुष्करद्वीपे तत्र तैः स नमस्कृतः । महादेवः पूज्यते तु ब्रह्मा त्रिभुवनेश्वरः ॥
…स्मिन्निवसति ब्रह्मा साध्यैः सार्धं प्रजापतिः । उपासते तत्र देवास्त्रयस्त्रिंशन्महर्षिभिः
…स तत्र पूज्यते चैव देवैर्देवोत्तमोत्तमः ॥
…म्बूद्वीपात्प्रवर्तन्ते रत्नानि विविधानि च । द्वीपेषु तेषु सर्वेषु प्रजानां हि क्रमात्त्विह
…र्वशो ब्रह्मचर्येण सत्येन च दमेन च । आरोग्यायुःप्रमाणाद्धि द्विर्गुणं च समन्ततः ॥
…तस्मिन्पुष्करद्वीपे यदुक्तं वर्षकद्वयम् । गोपायति प्रजास्तत्र स्वयं संज्जनमण्डिताः ॥
…श्वरो दण्डमुद्यम्य ब्रह्मा त्रिभुवनेश्वरः । सविष्णुः सशिवो देवः स पिता स पितामहः ॥
…भोजनं चाप्रयत्नेन तत्र स्वयमुपस्थितम् । षड्रसं सुमहावीर्यं भुञ्जते च प्रजाः सदा ॥
…रेण पुष्करस्याथ आवृत्यायः(यं) स्थितो महान् । स्वादूदकः समुद्रस्तु समन्तात्परिवेष्टि…
…ण तस्य महती दृश्यते लोकसंस्थितिः । काञ्चनी द्विगुणा भूमिः सर्वा चैकशिलोपमा
…मात्परेण शैलस्तु मर्यादान्ते तु मण्डलम् । प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते
…लोकस्तस्य चार्वाक्तु निरालोकस्ततः परम् । योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृ…
…तांश्च विस्तरस्तस्य पृथिव्यां कामगश्च सः । आलोके लोकशब्दस्तु निरालोके सलोक…
…कार्थे संमतो लोको निरालोकस्तु बाह्यतः ॥
…कविस्तारमात्रं तु आलोकः सर्वतो बहिः । परिच्छिन्नः समन्ताच्च उदकेनाऽऽवृतश्च सः
…रालोकात्परश्चापि अण्डमावृत्य तिष्ठति ॥
…डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी । भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा
…स्तपस्तथा सत्य एतावांल्लोकसंग्रहः । एतावानेव विज्ञेयो लोकान्तश्चैव तत्परः ॥ १४…
…भस्थायी भवेद्यादृक्प्रतीच्यां दिशि चन्द्रमाः । आदितः शुक्लपक्षस्य वपुरण्डस्य तद्विधम् ॥
…ण्डानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः । तिर्यगूर्ध्वमधस्ताच्च कारणस्याव्ययात्मनः ॥
…रणैः प्राकृतैस्तत्र ह्यावृतं प्रतिसर्गिभिः ॥
…गाधिक्येन चान्योन्यं धारयन्ति परस्परम् । परस्परावृताः सर्वे उत्पन्नाश्च परस्परात् ॥ १९२

---

१ ख. उपांस्थ° । ग. उपास्थिस° । घ. ङ. उपास्थ° । २ ख. घ. ङ. °ङ्गुलानां । …द्रीणां । ४ घ. °कस्य निधानं यत्तस्म° । ५ ख. ग. °स्याधानं ६ क. पुष्करे । ७ क. °… । ९ ख. ङ. °णं द्विगुणं ततः । १० ख. घ. ङ. सज्जनपण्डि° । ११ … …त° । १३ घ. ङ. °णैः प्रकृ° । १४ ख. ग. घ. ङ. °प्रतिः । …

...स्य समन्तात्तु संनिविष्टो घनोदधिः। समन्ताद्येन तोयेन धार्यमाणः स तिष्ठति ॥
घनतोयस्य तिर्यगूर्ध्वानुमण्डलम्। धार्यमाणं समन्तात्तु तिष्ठते घनतेजसा ॥ १९
...निभो वह्निः समन्तान्मण्डलाकृतिः। समन्ताद्घनवातेन धार्यमाणः स तिष्ठति ॥
...स्तथाऽऽकाशं धारयाणस्तु तिष्ठति ॥ १९८
...श्च तथाऽऽकाशं भूतादिं चाप्यसौ महान्। महान्व्याप्तो ह्यनन्तेन अव्यक्तेन तु धार्यते।
...मपरिव्यक्तं दशधा सूक्ष्म एव च। अनन्तमकृतात्मानमनादिनिधनं च तत् ॥ १९
...म परतो घोरमनालम्बमनामयम्। नैकयोजनसाहस्रं विप्रकृष्टं तमोवृतम् ॥ १९
निरालोकममर्यादमदेशिकम्। देवानामप्यविदितं व्यवहारविवर्जितम् ॥ १९
...न्ते च विख्यातमाकाशान्ते च भास्वरम्। मर्यादायामतस्तस्य शिवस्याऽऽयतनं महत्।
...मगस्यं तु स्थानं दिव्यमिति श्रुतिः। महतो देवदेवस्य मर्यादायां व्यवस्थितम्॥१६
...यावत्सप्तास्तु ये लोकाः मथिता बुधैः। ते लोका इत्यभिहिता जगतश्च न संशयः॥१६
...लात्सप्त सप्तैवोर्ध्वतलाः क्षितौ। सप्त स्कन्धास्तथा वायोः सब्रह्मसदना द्विजाः॥१६
...दिवं यावदत्र पञ्चविधा गतिः। प्रमाणमेतज्जगत एष संसारसागरः ॥ १
...ता प्रयात्येवं नैकजातिसमुद्भवा। विचित्रा जगतः सा वै प्रवृत्तिरनवस्थिता ॥ १
...भौतिकं नाम निसर्गबहुविस्तरम्। अतीन्द्रियैर्महाभागैः सिद्धैरपि न लक्ष्यते ॥ १
...देन कर्या चाग्निवायूनां महतस्तमसस्तथा। ईश्वरस्य तु देवस्य अनन्तस्य द्विजोत्तमाः ॥ ११४
...र संख्या परिमाणं वा अन्तो वाऽपि न विद्यते। अनन्त एष सर्वत्र सर्वस्थानेषु पठ्यते ॥
...प्युक्तं मया पूर्वं तस्मिन्नामानुकीर्तने ॥ १
...पि शिवनाम्ना हि तद्वः कात्स्न्येन कीर्तितम्। स एष सर्वत्र गतः सर्वस्थानेषु पूज्यते ॥
...तलसातले चैव आकाशे पवनेऽनले। अर्णवेषु च सर्वेषु दिवि चैव न संशयः ॥ १
...तपसि विज्ञेय एष एव महाद्युतिः। अनेकधा विभक्ताङ्गो महायोगी महेश्वरः ॥
...नाकेषु लोकेश इज्यते बहुधा प्रभुः ॥ १२
...ण परस्परोत्पन्ना धार्यन्ते च परस्परान्। आधाराधेयभावेन विकारास्ते विकारिणः ॥ १२
...य पादयो विकारास्ते परिच्छिन्नाः परस्परम्। परस्पराधिकाश्चैव प्रविष्टाश्च परस्परम् ॥ १२
...स्माद्विष्टाश्च तेऽन्योन्यं तस्मात्स्थैर्यमुपागताः। आगासन्नविशेषास्तु विशेषान्योन्यवेशनात्
...पृथिव्याद्याश्च वाय्वन्ताः परिच्छिन्नास्त्रयस्तु ते। १२
...गुणापचयसारेण परिच्छेदो विशेषतः। शेषाणां तु परिच्छेदः सौक्ष्म्यान्नेह विभाव्यते ॥ १
...भूतेभ्यः परतस्तेभ्यो ह्यालोकः परतः स्मृतः। भूतान्यालोक आकाशे परिच्छिन्नानि सर्वशः
...पात्रे महति पात्राणि यथैवान्तर्गतानि तु। भवन्त्यन्योन्यहीनानि परस्परसमाश्रयात् ॥ १
...स्तथा ह्यालोक आकाशे भेदास्त्वन्तर्गता मताः ॥ १२
...कृत्स्नान्येतानि चत्वारि अन्योन्यस्याधिकानि तु। यावदेतानि भूतानि तावदुत्पत्तिरुच्यते॥ १

...वाः। अरोग...
...र्णु। ३...१० । २ ख. ...छ. मदेशि० । ३ ख. ग. ङ. यतां । ४ ख. ग. घ. ङ. द्भवाः । वि० । ५
...ग. ङ. प्रागसन्नविशेषस्तु । ८ ख. ग. ङ. भ्यो ह्यलो० । घ. भ्यं

...न्तूनामिह संस्कारो भूतेष्वन्तर्गतो मतः । प्रत्याख्याय च भूतानि कार्योत्पत्तिर्न विद्य...
...स्मात्परिमिता भेदाः स्मृताः कार्यात्मकास्तु ते । करणात्मकास्तथैव स्युर्भेदा ये महद...
...येष संनिवेशो वो मया प्रोक्तो विभागशः । सप्तद्वीपसमुद्राया याथातथ्येन वै द्विजाः
...विस्तारान्मण्डलाच्चैव प्रसंख्यातेन चैव हि । वैश्वरूपं प्रधानस्य परिमाणैकदेशिकम् ॥
...धिष्ठानं भगवतो यस्य सर्वमिदं जगत् । एवं भूतगणाः सप्त संनिविष्टाः परस्परम् ॥
...विधान्संनिवेशस्तु मया शक्यः प्रभाषितुम् । एतावदेव श्रोतव्यं संनिवेशे तु पा...
...स्त प्रकृतयस्त्वेता धारयन्ति परस्परम् । तास्त्वल्पपरिमाणेन प्रसंख्यातुमिहोच्य... ॥
...संख्येयाः प्रकृतयस्तिर्यगूर्ध्वमधश्च याः ॥
...रकासंनिवेशश्च यावद्दिव्यं तु मण्डलम् । मर्यादासंनिवेशस्तु भूमेस्तदनुमण्ड गिरिः ।
...महातः परं प्रवक्ष्यामि पृथिव्यां वै द्विजोत्तमाः ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामैकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६३१

---

अथ पञ्चाशोऽध्यायः ।

---

ज्योतिष्प्रचारः ।

सूत उवाच—

...वः प्रमाणमूर्ध्वं च वर्ण्यमानं निबोधत । पृथिवी वायुराकाशमापो ज्योतिश्च प...
...नन्तधातवो ह्येते व्यापकास्तु प्रकीर्तिताः ॥
जननी सर्वभूतानां सर्वभूतधरा धरा । नानाजनपदाकीर्णा नानाधिष्ठानपत्तना
नानानदनदीशैला नैकजातिसमाकुला । अनन्ता गीयते देवी पृथिवी बहुविस्त...
...दीनदसमुद्रस्थास्तथा क्षुद्राश्रयाः स्थिताः । पर्वताकाशसंस्थाश्च अन्तर्भूमिगताश्च
...आपोऽनन्ताश्च विज्ञेयास्तथाऽग्निः सर्वलौकिकः । अनन्तः पठ्यते चैव व्यापकः
...तथाऽऽकाशमनालम्बं रम्यं नानाश्रयं स्मृतम् । अनन्तं प्रथितं सर्वं वायुश्चाऽऽका...
...आपः पृथिव्यामुदके पृथिवी चोपरि स्थिता । आकाशश्चापरमधः पुनर्भूमिः पुनर्... ॥
...प्रमन्तम(न्तो ह्य)नन्तस्य भौतिकस्य न विद्यते । पुरा सुरैरभिहितं निश्चितं तु नि... ॥
...भूमिर्जलमथाऽऽकाशमिति ज्ञेया परम्परा । स्थितिरेषा तु विज्ञेया सप्तमेऽस्मिन्रसाः ॥
...शयोजनसाहस्रमेकभौमं रसातलम् । साधुभिः परिविख्यातमेकैकं बहुविस्तरम्
...धमतलं चैव सुतलं तु ततः परम् । ततः परतरं विद्याद्वितलं बहुविस्तरम् ॥
...तो गभस्तलं नाम परतश्च महातलम् । श्रीतलं च ततः प्राऽऽहुः पातालं सप्तमं
...कृष्णभौमं च प्रथमं भूमिभागं च कीर्तितम् । पाण्डुभौमं द्वितीयं तु तृतीयं रक्तमृ...

---

१ ख. ङ. °ष्या पञ्चभू° । २ ख घ. °द्रा वा याथा° । ३ ख. घ. हि । विश्व° । ४ ...न. प्र... ख. ग. स्वल्पं प° । ६ ख. ग. ङ. °थिव्या वै° । ७ ख. °पो भवाश्च । ८ घ. °ते । सुरा° । ९ ...वैं च... ङ. °रविहितानि° ।

(ज्योतिष्प्रचारः)

...तुर्थं तु पञ्चमं शर्करातलम् । षष्ठं शिलामयं चैव सौवर्णं सप्तमं तलम् ॥ १४
...ख्यातमसुरेन्द्रस्य मन्दिरम् । नमुचेरिन्द्रशत्रोर्हि महानादस्य चाऽऽलयम् ॥ १५
...कुकर्णस्य कबन्धस्य च मन्दिरम् । निष्कुलादस्य च पुरं प्रहृष्टजनसंकुलम् ॥ १६
...च भीमस्य शूलदन्तस्य चाऽऽलयम् । लोहिताक्षकलिङ्गानां नगरं श्वापदस्य तु ॥ १७
...च पुरं माहेन्द्रस्य महात्मनः । कालियस्य च नागस्य नगरं कलशस्य च ॥ १८
...मर्पाणि नागदानवरक्षसाम् । तले ज्ञेयानि प्रथमे कृष्णभौमे न संशयः ॥ १९
...परतो विप्रा दैत्येन्द्रस्य सुवक्षसः । महाजम्भस्य च तथा नगरं प्रथमस्य तु ॥ २०
निराले... निकुम्भस्य च मन्दिरम् । शङ्खाख्येयस्य च पुरं नगरं गोमुखस्य च ॥ २१
...ते च विप्र मेघस्य क्रथनस्य च । पुरं च कुर्कुवादस्य महोष्णीषस्य चाऽऽलयम् ॥ २२
...मगस्य तु पुरमश्वतरस्य च । कद्रुपुत्रस्य च पुरं तक्षकस्य महात्मनः ॥ २३
...दानवरक्षसाम् । द्वितीयेऽस्मिंस्तले विप्राः पाण्डुभौमे न संशयः ॥ २४
...महादस्य महात्मनः । अनुह्लादस्य च पुरं दैत्येन्द्रस्य महात्मनः ॥ २५
...पुरं त्रिशिरसस्तथा । शिशुमारस्य च पुरं हृष्टपुष्टजनाकुलम् ॥ २६
...राक्षसस्य च मन्दिरम् । राक्षसेन्द्रस्य च पुरं कुम्भिलस्य खरस्य च ॥ २७
...पुरमुल्कामुखस्य च । हेमकस्य च नागस्य तथा पाण्डुरकस्य च ॥ २८
...कपिलस्य च मन्दिरम् । नन्दस्य चोरगपतेर्विशालस्य च मन्दिरम् ॥ २९
...नागदानवरक्षसाम् । तृतीयेऽस्मिंस्तले विप्राः पीतभौमे न संशयः ॥ ३०
...कालनेमेर्महात्मनः । गजकर्णस्य च पुरं नगरं कुञ्जरस्य च ॥ ३१
...सुमालेर्बहुविस्तरम् । मुञ्जस्य लोकनाथस्य वृकवक्त्रस्य चाऽऽलयम् ॥ ३२
...बहुपक्षिसमाकुलम् । नगरं वैनतेयस्य चतुर्थेऽस्मिन्रसातले ॥ ३३
...बहुयोजनविस्तृते । विरोचनस्य नगरं दैत्यसिंहस्य धीमतः ॥ ३४
...स्य हिरण्याक्षस्य चाऽऽलयम् । पुरं च विद्युज्जिह्वस्य राक्षसस्य च धीमतः ॥
...राक्षसेन्द्रस्य शालिनः । कर्मारस्य च नागस्य स्वस्तिकस्य जयस्य च ॥ ३६
...नागदानवरक्षसाम् । पञ्चमेऽपि तथा ज्ञेयं शर्करानिलये सदा ॥ ३७
...केसरेर्नगरोत्तमम् । सुपर्वणः पुलोम्नश्च नगरं महिषस्य च ॥
...पुरमुत्क्रोशस्य महात्मनः ॥ ३८
...सापुत्रः शतशीर्षो मुदा युतः । कश्यपस्य सुतः श्रीमान्वासुकिर्नाम नागराट् ॥
...नागदानवरक्षसाम् । षष्ठे तलेऽस्मिन्विख्याते शिलाभौमे रसातले ॥ ४०
...पाताले सर्वपश्चिमे । पुरं बलेः प्रमुदितं नरनारीसमाकुलम् ॥ ४१
...पूर्णमुक्तैर्देवशत्रुभिः । मुचुकुन्दस्य दैत्यस्य तत्र वै नगरं महत् ॥ ४२

...°वाः । अरो... तु । २ ख. शून्वद° । ३ ख. °ताह्यकलिङ्गाभ्यां न° । घ. °ताह्यकलिङ्गाभ्यां न° । ४ ग. ङ. ...रेणुं । ... °लशस्य । ६ क. ख सुरक्ष° । ७ ख. घ. ङ. °ङ्खाख्यस्य । ८ क. ग. कुरुपा° । ९ घ. ङ. ...त्रा° । ... °कालस्य । ११ ख. °मकूटस्य । १२ ग. घ. कलसस्य । १३ ख. ङ. वैडूर्य । १४ ख. घ. ङ. ...

( ज्योतिष्प्रचारः )

नैकैर्दितिपुत्राणां समुदीर्णैर्महापुरैः । तथैव नागनगरैर्ऋद्धिमद्भिः सहस्रशः ॥
ाहत्यानां दानवानां च समुदीर्णैर्महापुरैः । उदीर्णैराक्षसावासैरनेकैश्च समाकुलम् ॥
ालान्ते च विप्रेन्द्रा विस्तीर्णे बहुयोजने । आस्ते रक्तारविन्दाक्षो महात्मा ह्यजर
तशङ्खोदरवपुर्नीलवासा महाभुजः । विशालभोगो द्युतिमांश्चित्रमालाधरो बली ॥
मश्शृङ्गावदातेन दीप्तास्येन विराजता । प्रभुर्मुखसहस्रेण शोभते वै स कुण्डली ॥
जिह्वामालया देवो लोलज्वालानलार्चिषा । ज्वालामालापरिक्षिप्तः कैलास इव
स तु नेत्रसहस्रेण द्विगुणेन विराजता । बालसूर्याभिताम्रेण शोभते स्निग्धमण्डलः ॥
तस्य कुन्देन्दुवर्णस्य अक्षमाला विराजते । तरुणादित्यमालेव श्वेतपर्वतमूर्धनि ॥
जटाकरालो द्युतिमाल्लँक्ष्यते शयनासने । विस्तीर्ण इव मेदिन्यां सहस्रशिखरो गिरिः ।
महाभोगैर्महाभागैर्महानागैर्महाबलैः । उपास्यते महातेजा महानागपतिः स्वयम् ॥
स राजा सर्वनागानां शेषो नाम महाद्युतिः । सा वैष्णवी ह्यहितनुर्मर्यादायां व्यवस्थिता
सप्तैवमेते कथिता व्यवहार्या रसातलाः । देवासुरमहानागराक्षसाध्युषिताः सदा ॥
अतः परमनालोक्यमगम्यं सिद्धसाधुभिः । देवानामप्यविदितं व्यवहारविवर्जितम् ॥
पृथिव्यग्न्यम्बुवायूनां नभसश्च द्विजोत्तमाः । महत्त्वमेवमृषिभिर्वर्ण्यते नात्र संशयः॥*
त ऊर्ध्वं प्रवक्ष्यामि सूर्याचन्द्रमसोर्गतिम् । सूर्याचन्द्रमसावेतौ भ्रमन्तौ यावदेव तु
ाशतः स्वभाभिस्तौ मण्डलाभ्यां समास्थितौ ॥
ायात्रत्तां च समुद्राणां द्वीपानां तु स विस्तरः । विस्तरार्धं पृथिव्यास्तु भवेदन्यत्र बाह्यतः
पर्यासपारिमाण्यं तु चन्द्रादित्यौ प्रकाशतः । पर्यासपारिमाण्येन भूमेस्तुल्यं दिवं स्मृतम्
वति त्रीनिमाल्ँलोकान्यस्मात्सूर्यः परिभ्रमन् । अवधातुः प्रकाशाख्यो ह्यवनात्स रविः
तः परं प्रवक्ष्यामि प्रमाणं चन्द्रसूर्ययोः । महितत्वान्महीशब्दो ह्यस्मिन्वर्षे निपात्यते
अस्य भारतवर्षस्य विष्कम्भं तु सुविस्तरम् । मण्डलं भास्करस्याथ योजनानां निबोध
नवयोजनसाहस्रो विस्तारो भास्करस्य तु । विस्तारात्त्रिगुणश्चास्य परिणाहोऽथ मण्डलम्
विष्कम्भो मण्डलस्यैव भास्कराद्द्विगुणः शशी ॥
अतः पृथिव्यां वक्ष्यामि प्रमाणं योजनैः सह । सप्तद्वीपसमुद्राया विस्तारो मण्डलं च यत्
इत्येतदिह संख्यातं पुराणं परिमाणतः । तद्वक्ष्यामि प्रसंख्याय सांप्रतैरभिमानिभिः ॥
अभिमानिव्यतीता ये तुल्यास्ते सांप्रतैरिह । देवा ये वै ह्यतीतास्ते रूपैर्नामभिरेव च ॥
तस्मात्तु सांप्रतैर्देवैर्वक्ष्यामि वसुधातलम् । दिवस्तु संनिवेशो वै सांप्रतैरेव कृत्स्नशः ॥
शतार्धकोटिविस्तारा पृथिवी कृत्स्नतः स्मृता । तस्या बाधप्रमाणेन मेरोर्वै चातुरन्तरम्
पृथिव्या बाधविस्तारो योजनाग्रात्प्रकीर्तितः । मेरुमध्यात्प्रतिदिशं कोटिरेका तु सा स्मृता
तथा शतसहस्राणि एकोननवतिः पुनः । पञ्चाशच्च सहस्राणि पृथिव्यां बाधविस्तरः ॥

---

* षट्पञ्चाशत्तमश्लोकान्तेऽध्यायसमाप्तिः ख. पुस्तके वर्तते ।

---

१ घ. ङ. ˚नि । फ्रा˚ । २ घ. ˚लोर्ध्वंतनुर्लक्षते । ङ. ˚लोर्ध्वतनूर्लक्ष्यते । ३ ख. घ. ङ. ˚नाग्र
ग. ङ. ˚नाग्नाग्निवो˚ । ५ ख. ग. घ. ङ. ˚ष्कम्भान्मण्ड˚ । ६ ग. घ. ङ. ˚निनो व्य । ७ घ. ˚वै च
दश स्मृताः । त˚ । ९ क. ˚व्याबाधवि˚ ।

विस्तरं कृत्स्नं योजनैस्तन्निबोधत । तिस्रः कोट्यस्तु विस्तारः संख्यातः स चतुर्दिश ॥
सहस्राणामेकोनाशीतिरुच्यते । सप्तद्वीपसमुद्रायाः पृथिव्यास्त्वेष विस्तरः ॥
त्रिगुणं चैव पृथिव्यन्तस्य मण्डलम् । गणितं योजनाग्रं तु कोट्यस्त्वेकादश स्मृताः ॥
सहस्रं तु सप्तत्रिंशाधिकानि तु । इत्येतद्वै प्रसंख्यातं पृथिव्यन्तस्य मण्डलम् ॥
निवेशस्य दिवि यावद्धि मण्डलम् । पर्यासः संनिवेशस्य भूमेस्तावत्तु मण्डलम् ॥
परिमाण्येन भूमेस्तुल्यं दिवं स्मृतम् । सप्तानामपि लोकानामेतन्मानं प्रकीर्तितम् ॥
परिमाण्येन मण्डलानुगतेन च । उपर्युपरि लोकानां छत्रवत्परिमण्डलम् ॥
विहिता सर्वा येषु तिष्ठन्ति जन्तवः । एतदण्डकटाहस्य प्रमाणं परिकीर्तितम् ॥
स्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी । भूर्लोकश्च भुवश्चैव तृतीयः स्वरिति स्मृतः ॥
पिको जनश्चैव तपः सत्यश्च सप्तमः ॥
सप्त कृता लोकाश्छत्राकारा व्यवस्थिताः । स्वकैरावरणैः सूक्ष्मैर्धार्यमाणाः पृथक्पृथक् ॥
गाधिकाभिश्च ताभिः प्रकृतिभिर्बहिः । धार्यमाणा विशेषैश्च समुत्पन्नैः परस्परम् ॥
ण्डस्य समन्ताच्च संनिविष्टो घनोदधिः । पृथिवीमण्डलं कृत्स्नं घनतोयेन धार्यते ॥
धिपरेणाथ धार्यते घनतेजसा । बाह्यतो घनतेजस्तु तिर्यगूर्ध्वं तु मण्डलम् ॥
घनवातेन धार्यमाणं प्रतिष्ठितम् । घनवातात्तथाऽऽकाशमाकाशं च महात्मना ॥
देना वृतं सर्वं भूतादिर्महता वृतः । वृतो महाननन्तेन प्रधानेनाव्ययात्मना ॥
लोकपालानां प्रवक्ष्यामि यथाक्रमम् । ज्योतिर्गणप्रचारस्य प्रमाणं परिवक्ष्यते ॥
प्राच्यां दिशि तथा मानसस्यैव मूर्धनि । वस्वोकसारा माहेन्द्री पुण्या हेमपरिष्कृता ॥
न पुनर्मेरोर्मानसस्यैव मूर्धनि । वैवस्वतो निवसति यमः संयमने पुरे ॥
रां तु पुनर्मेरोर्मानसस्यैव मूर्धनि । सुखा नाम पुरी रम्या वरुणस्याथ धीमतः ॥
त्तरस्यां मेरोस्तु मानसस्यैव मूर्धनि । तुल्या माहेन्द्रपुर्या तु सोमस्यापि विभावरी ॥
पोत्तरपृष्ठे तु लोकपालाश्चतुर्दिशम् । स्थिता धर्मव्यवस्थायै लोकसंरक्षणाय च ॥
पालोपरिष्टात्तु सर्वतो दक्षिणायने । काष्ठागतस्य सूर्यस्य गतिर्या तां निबोधत ॥
णे प्रक्रमे सूर्यः क्षिप्तेषुरिव सर्पति । ज्योतिषां चक्रमादाय सततं परिगच्छति ॥
मध्यमरावत्यां यदा भवति भास्करः । वैवस्वते संयमने उदयस्तत्र उच्यते ॥
यामर्धरात्रं च मध्यगः स्याद्रविर्यदा । सुखायामथ वारुण्यामुत्तिष्ठन्स तु दृश्यते ॥
यामर्धरात्रं स्यान्माहेन्द्र्यामस्तमेति च । तदा दक्षिणपूर्वेषामपराह्णो विधीयते ॥
णापरदेश्यानां पूर्वाह्णः परिकीर्त्यते । तेषामपरात्रं च ये जना उत्तरापथे ॥
त्तरपूर्वा ये पूर्वरात्रं तु तान्प्रति । एवमेवोत्तरेष्वर्को भवनेषु विराजते ॥

१. 'तुर्दश' । २ क. विस्तारा° । ३ ग. ङ. 'कपालस्य' । ४ ङ. 'गूर्ध्वांतुम°' । ५ ग. ङ. 'घस्वौक' । ६ ... । ७ ग. ङ. 'यस्तत्र' । ८ घ. 'रात्रे च' । ९ ख. ग. घ. ङ. 'ते' । मुख्याया ।

समाप्तोऽयं वायुपुराणान्तर्गताध्यायानां विषयानुक्रमः ।

सुखायामथ वारुण्यां मध्याह्ने चार्यमा यदा । * विभावर्यां सोमपुर्यामुत्तिष्ठति विभा
रात्र्यर्धं चामरावत्यामस्तमेति यमस्य च । सोमपुर्यां विभायां तु मध्याह्ने स्याद्दिवाकर
महेन्द्रस्यामरावत्यामुत्तिष्ठति यदा रविः । अर्धरात्रं संयमने वारुण्यामस्तमेति च ॥
स शीघ्रमेति पर्येति भास्करोऽलातचक्रवत् । भ्रमन्वै भ्रममाणानि ऋक्षाणि गगने र

* एतदर्धस्थानेऽयं ग्रन्थः ख. पुस्तके वर्तते—विभावर्यां सोमपुर्यां भास्वरं सूर्यसंज्ञितम् ॥ १
नक्षत्रग्रहसोमानां प्रतिष्ठा योनिरेव च । ऋक्षचन्द्रग्रहाः सर्वे विज्ञेयाः सूर्यसंभवाः ॥ २ ॥
नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः । शेषाः पञ्चग्रहा ज्ञेया ईश्वराः कामरूपिणः ॥ ३ ॥
पठ्यते चाग्निरादित्य उदकश्चन्द्रमाः स्मृतः । शेषाणां प्रकृतिः सम्यग्वर्ण्यमानां निबोधत ॥ ४
सुरसेनापतिः स्कन्दः पठ्यतेऽङ्गारको ग्रहः । नारायणं बुधं प्राहुर्देवं ज्ञानविदो बुधाः ॥ ५ ॥
रुद्रो वैवस्वतः साक्षाद्यमो लोकप्रभुः स्वयम् । महाग्रहो द्विजश्रेष्ठो मन्दगामी शनैश्वरः ॥ ६ ॥
देवासुरगुरू द्वौ तु भानुमन्तौ महाग्रहौ । प्रजापतिसुतावेतावुभौ शुक्रबृहस्पती । ७ ॥
देवी महेन्द्रस्त्वनयोराधिपत्ये विनिर्मितौ । आदित्यमूलमखिलं त्रैलोक्यं नात्र संशयः ॥ ८ ॥
भवत्यस्य जगत्कृत्स्नं सदेवासुरमानुषम् । रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्राग्निदिवौकसाम् । ९ ॥
द्युतिर्द्युतिमतां कृत्स्ना यत्तेजः सार्वलौकिकम् । सर्वात्मा सर्वलोकेशो मूलं परमदैवतम् ॥ १० ॥
ततः संजायते सर्वं तत्र चैव प्रलीयते । भावाभावौ हि लोकानामादित्यान्निःसृतौ पुरा ॥ ११ ॥
जगज्ज्ञयो ग्रहो विप्रा दीप्तिमान्सुग्रहो रविः । यत्र गच्छन्ति निधनं जायन्ते च पुनः पुनः ॥ १२
क्षणा मुहूर्ता दिवसा निशाः पक्षाश्च कृत्स्नशः । मासाः संवत्सराश्चैव ऋतवोऽब्दयुगानि च । १३
तदादित्यादृते येषां कालसंख्या न विद्यते । कालादृते न निगमो न दीक्षा नाह्निकक्रमः ॥ १४ ॥
ऋतूनामविभागश्च पुष्पमूलफलं कुतः । कुतः सस्याभिनिष्पत्तिर्गुणौषधिगणादि वा ॥ १५ ॥
अभावो व्यवहाराणां देवानां दिवि चेह च । जगत्प्रतापनमृते भास्करं वारितस्करम् ॥ १६ ॥
स एव कालश्चाग्निश्च द्वादशात्मा प्रजापतिः । तपत्येष द्विजश्रेष्ठास्त्रैलोक्यं सचराचरम् ॥ १७ ॥
स एष तेजसां राशिः समस्तः सार्वलौकिकः । उत्तमं मार्गमास्थाय वायोर्भाभिरिदं जगत् ॥ १८ ॥
पार्श्वमूर्ध्वमधश्चैव तापयत्येष सर्वशः । रवे रश्मिसहस्रं यत्प्राङ्मया समुदाहृतम् ॥ १९ ॥
तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः । सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च । २० ॥
विश्वश्रवाः पुनश्चान्यः संपद्वसुरतः परम् । अर्वावसुः पुनश्चान्यः स्वराडन्यः प्रकीर्तितः ॥ २१ ॥
सुषुम्ना सूर्यरश्मिस्तु क्षीणं शशिनमेधयन् । तिर्यगूर्ध्वप्रचारोऽसौ सुषुम्नः परिकीर्तितः ॥ २२ ॥
हरिकेशः पुरस्ताद्या ऋक्षयोनिः प्रकीर्तिता । दक्षिणे विश्वकर्मा तु रश्मिर्वर्धयते बुधम् ॥ २३ ॥
विश्वश्रवास्तु यः पश्चाच्छुक्रयोनिः स्मृतो बुधैः । संपद्वसुस्तु यो रश्मिः सा योनिर्लोहितस्य तु ॥ २४
षष्ठस्त्वर्वावसूरश्मिर्योनिस्तु स बृहस्पतेः । शनैश्चरं पुनश्चापि रश्मिराप्यायते स्वराट् । २५ ॥
एवं सूर्यप्रभावेण ग्रहनक्षत्रतारकाः । वर्धन्ते विदिताः सर्वा विश्वं चेदं पुनर्जगत् ॥ २६ ॥
न क्षीयन्ते पुनस्तानि तस्मान्नक्षत्रता स्मृता । क्षेत्राण्येतानि वै पूर्वमापतन्ति गभस्तिभिः ॥ २७ ॥
तेषां क्षेत्राण्यथाऽऽदत्ते सूर्यो नक्षत्रतां ततः । तीर्णानां सुकृतेनेह सुकृतान्ते गृहाश्रयात् ॥ २८ ॥
ताराणां तारका ह्येताः शुक्लत्वाच्चैव तारकाः । दिव्यानां पार्थिवानां च नैशाना चैव सर्वशः ॥ २९
आदानान्नित्यमादित्यस्तमसां तेजसां महान् । सुवतिस्यन्दनार्थश्च धातुरेष विभाव्यते ॥ ३० ॥
सवनात्तेजसोऽपां च तेनासौ सविता मतः । बह्वर्थश्चन्द्र इत्येष ल्हादने धातुरिष्यते ॥ ३१ ॥
शुक्लत्वे चामृतत्वे च शीतत्वे च विभाव्यते । सूर्याचन्द्रमसोर्दिव्ये मण्डले भास्करे खगे ॥ ३२ ॥
ज्वलत्तेजोमये शुक्ले वृत्तकुम्भनिभे शुभे । घनतोयात्मकं तत्र मण्डलं शशिनः स्मृतम् ॥ ३३ ॥
घनतेजोमयं शुक्लं मण्डलं भास्करस्य तु । विशन्ति सर्वदेवास्तु स्थानान्येतानि सर्वशः ॥ ३४ ॥
मन्वन्तरेषु सर्वेषु ऋक्षसूर्यग्रहाश्रयाः । तानि देवगृहाण्येव तदाख्यास्ते भवन्ति च ॥ ३५ ॥
शौरं सूर्योविशस्था ......तिविभावसुः इति ॥

१ ख. घ. °भावर्यां म° । २ घ. °भयन्नित्यमृक्षा° ।

...द्वीपेषु दक्षिणान्तेन सर्पति । उदयास्तमनेनासावुत्तिष्ठति पुनः पुनः ॥ १०
...पराह्णे तु द्वौ द्वौ देवालयौ तु सः । तपत्येकं तु मध्याह्ने तैरेव तु स रश्मिभिः ॥ १०
...र्धमानाभिरामध्याह्ने तपन्रविः । अतः परं ह्रसन्तीभिर्गोभिरस्तं[1] स गच्छति ॥ १०
...मयाख्यां हि स्मृते पूर्वापरे दिशौ । यावत्पुरस्तात्तपति तावत्पृष्ठे तु पार्श्वयोः ॥ १०
...भिदृश्यते सूर्यस्तेषां स उदयः स्मृतः । यत्र प्रणाशमायाति तेषामस्तः स उच्यते ॥ १०
...रे मेरुर्लोकालोकस्तु दक्षिणे । विदूरभावादर्कस्य भूमेर्लेखावृतस्य च ॥
...रश्मयो यस्मात्तेन रात्रौ न दृश्यते ॥ १०
...तारागणां दर्शनं भास्करस्य च । उच्छ्रयस्य प्रमाणेन ज्ञेयमस्तमनोदयम् ॥ १०
...योऽग्निरापश्च कृष्णच्छाया च मेदिनी । विदूरभावादर्कस्य उद्यतस्य विरश्मिता ॥
...वो विरश्मित्वाद्रक्तत्वाच्चाप्यनुष्णता ॥ १
...स्त्ववस्थितः सूर्यो यत्र यत्र तु दृश्यते । ऊर्ध्वं गतः सहस्रं तु योजनानां स दृश्यते ॥ १
...र्द्धे सौरी पादेन अस्तं गच्छति भास्करे । अग्निमाविशते रात्रौ तस्माद्दूरात्प्रकाशते ॥ १
...स्तु पुनः सूर्यो ह्यस्तमाग्नेयमाविशत् । संयुक्तो वह्निना सूर्यस्ततः स तपते दिवा ॥ १
...ण्यं च [3]औष्ण्यं च सूर्याग्नी च तेजसी । परस्परानुप्रवेशादाप्यायेते दिवानिशम् ॥ १
...चे भूम्यर्धे तथा तस्मिंश्च दक्षिणे । उत्तिष्ठति [4]तथा सूर्ये रात्रिराविशते त्वपः ॥
...भवन्त्यापो दिवारात्रिप्रवेशनात् ॥ १
...याति पुनः सूर्ये दिनं वै प्रविशत्यपः । तस्माच्छुक्ला भवन्त्यापो नक्तमह्नः प्रवेशनात्
...क्रमयोगेन(ग) भूम्यर्धे दक्षिणोत्तरे । उदयास्तमनेऽर्कस्य अहोरात्रं विशत्यपः ॥
...सूर्यप्रकाशाख्यं तामसी रात्रिरुच्यते । तस्माद्व्यवस्थिता रात्रिः सूर्यापेक्ष्यमहः स्मृ...
...पुष्करमध्येन यदा सर्पति भास्करः[6] । त्र्यंशांशकं तु मेदिन्या मुहूर्तेनैव गच्छति ॥
...जनाग्रान्मुहूर्तस्य इमां संख्यां निबोधत । पूर्णं शतसहस्राणामेकत्रिंशत्तु सा स्मृता ॥
...शत्तु तथाऽन्यानि सहस्राण्यधिकानि तु । मौहूर्तिकी गतिर्ह्येषा सूर्यस्य तु विधीयते ॥ १०५
...न गतियोगेन यदा काष्ठां तु दक्षिणाम् । पर्यागच्छेत्तदाऽऽदित्यो माघे काष्ठन्तमेव हि ॥ १
...यते दक्षिणायां तु काष्ठायां तन्निबोधत । नव कोट्यः प्रसंख्याता योजनैः परिमण्डलम् ॥ १
...समा शतसहस्राणि चत्वारिंशच्च पञ्च च । अहोरात्रात्पतङ्गस्य गतिरेषा विधीयते ॥ १
...पृथिणाद्विनिवृत्तोऽसौ विषुवस्थो यदा रविः । क्षीरोदस्य समुद्रस्य उत्तरान्तोदितश्चरन्
...गुणालं विषुवच्चापि? योजनैस्तन्निबोधत । तिस्रः कोट्यस्तु विस्तीर्णा विषुवच्चापि? सा स्मृता ॥
...पूते शतसहस्राणामशीत्येकाधिका पुनः । श्रवणे चोत्तरां काष्ठां चित्रभानुर्यदा भवेत् ॥
...द्वीपस्य पष्ठस्य उत्तरा[11]न्तोदितश्चरन् ॥ १२
...रायां च काष्ठायां प्रमाणं मण्डलस्य च । योजनाग्रात्प्रसंख्याता कोटिरेका तु सा द्विजैः ॥
...तिर्नियुतानीह योजनानां तथैव च । [12]अष्टपञ्चाशतं चैव योजनान्यधिकानि तु ॥ १२

१ ख. ग. घ. °स्तं निग° । २ ख. घ. °दिमना । रक्त । ३ ग. घ. तथौष्ण्यं च । ४ ख. सदा । भा° । ५ ख. ... दिनमाविशते ह्यपः । ६ क. °रः । त्रिशा° । ७ ख. घ. ङ. स्मृतम् । प° । ८ क. °रान्ता दिशश्च° । ९ ... १० ख. ग. ङ. °स्तीर्णो विषुवच्चापितः स्मृतः । त° । ११ क. °रान्ता दिशश्च । १२ ख. ग.

[illegible]गवीथ्युत्तरा वीथी अजवीथी च दक्षिणा । मूलं चैव तथाऽऽषाढे ह्यजवीथ्युदयास्त्र
[illegible]भिजित्पूर्वतः स्वातिर्नागवीथ्युदयास्त्रयः ॥
[illegible]ष्ठयोरन्तरं यच्च तद्वक्ष्ये योजनैः पुनः । एतच्छतसहस्राणामेकत्रिंशोत्तरं शतम् ॥
[illegible]यस्त्रिंशाधिकाश्चान्ये त्रयस्त्रिंशच्च योजनैः । काष्ठयोरन्तरं ह्येतद्योजनाग्रात्प्रतिष्ठितम् ॥
[illegible]ष्ठयोर्लेखयोश्चैव अन्तरे दक्षिणोत्तरे । ते तु वक्ष्यामि संख्याय योजनैस्तन्निबोधत ।
[illegible]कैकमन्तरं तस्या नियुतान्येकसप्ततिः । सहस्राण्यतिरिक्ताश्च ततोऽन्या पञ्चसप्ततिः ॥
[illegible]ख्योः काष्ठयोश्चैव बाह्याभ्यन्तरयोः स्मृतम् । अभ्यन्तरं तु पर्येति मण्डलान्युत्तरायणे
[illegible]ह्यतो दक्षिणे चैव सततं तु यथाक्रमम् । मण्डलानां शतं पूर्णमशीत्यधिकमुत्तरम् ॥
[illegible]चरते दक्षिणे चापि तावदेव विभावसुः । प्रमाणं मण्डलस्याथ योजनाग्रान्निबोधत ।
[illegible]विंशद्योजनानां सहस्राणि समासतः । शते द्वे पुनरप्यन्ये योजनानां प्रकीर्तिते ॥
[illegible]विंशतिभिश्चैव योजनैरधिकैर्हि ते । एतत्प्रमाणमाख्यातं योजनैर्मण्डलं हि तत् ॥
[illegible]क्रम्भो मण्डलस्यैव तिर्यक्स तु विधीयते । प्रत्यहं चरते तानि सूर्यो वै मण्डलक्रमम् ।
[illegible]लचक्रपर्यन्तो यथा शीघ्रं निवर्तते । दक्षिणे प्रक्रमे सूर्यस्तथा शीघ्रं निवर्तते ॥
[illegible]त्प्रकृष्टां भूमिं च कालेनाल्पेन गच्छति । सूर्यो द्वादशभिः शीघ्रं मुहूर्तैर्दक्षिणोत्तरे ॥
[illegible]दशाधिकृक्षाणामह्नाऽनुचरते रविः । मुहूर्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥
[illegible]लचक्रमध्यस्तु यथा मन्दं प्रसर्पति । तथोदगयने सूर्यः सर्पते मन्दविक्रमः ॥
[illegible]दशार्धमर्धेन ऋक्षाणां चरते रविः । तस्माद्दीर्घेण कालेन भूमिमल्पां निगच्छति ॥
[illegible]मुहूर्तैस्तु उत्तरायणपश्चिमम् । अहर्भवति तच्चापि चरते मन्दविक्रमः ॥
[illegible]र्धमर्धेन ऋक्षाणां चरते रविः । मुहूर्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥
[illegible]तरं ताभ्यां चक्रं भ्रमति वै यथा । मृत्पिण्ड इव मध्यस्थो ध्रुवो भ्रमति वै तथा
[illegible]र्तानिवाऽऽहुरहोरात्रं ध्रुवो भ्रमन् । उभयोः काष्ठयोर्मध्ये भ्रमते मण्डलानि सः ॥
[illegible]क्रनाभिस्तु यथा तत्रैव वर्तते । ध्रुवस्तथा हि विज्ञेयस्तत्रैव परिवर्तते ॥
[illegible]काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु । दिवा नक्तं च सूर्यस्य मन्दा शीघ्रा च वै गतिः
[illegible]क्रमे त्विन्दोर्दिवा मन्दा गतिः स्मृता । तथैव च पुनर्नक्तं शीघ्रा सूर्यस्य [illegible] गतिः
[illegible]प्रक्रमे चैव दिवा शीघ्रं विधीयते । गतिः सूर्यस्य नक्तं वै मन्दा चापि तथा स्मृता
[illegible]तन्यो[illegible] विभजन्रात्र्यहानि तु । तथा विचरते मार्गे समेन विषमेण च ॥
[illegible]धिमासौ च[illegible] लोकपालाश्चतुर्दिशम् । अगस्त्यश्चरते तेषामुपरिष्टाज्जवेन तु ॥
[illegible] कुहूश्चैव राविशेषणैः ॥
[illegible] तपस्तपस्यकालोकस्य चोत्तरम् । लोकसंतारको ह्येष वैश्वानरपथाद्बहिः ॥
[illegible] नभो नभस्यत्संप्रकाशते । पार्श्वयोः पृष्ठतस्तावल्लोकालोकस्य सर्वतः ॥

* अत्राऽऽत्मनेपदमार्षम् ।

१ ख. ग. ङ. °कोनिका [illegible] २ ख. ग. घ. ङ. °त । योजनानां सहस्राणि सप्तादशस° । ३ घ. °स्यैव ति[illegible] [illegible]५ ख. °नवक° । ६ क. विंशश° । [illegible] ५ ख. ग. घ. ङ. °हूर्ते द° । ६ ख. ग. ङ. °मल्पं नि° । ७ ख. ग. ङ. °हूर्त[illegible] [illegible] °भाष्यते । ११ क. घ. नक्षत्रं । [illegible] मन्दगतिस्तथा । ल° । ११ ग. घ. ङ. °तानको° । स. °तापको° । [illegible]र्यस्य वि° । १५ क वै सर्व° । [illegible] ख. घ. ङ. इषः ।

निमेषादिकृतः कालः काष्ठाया दश पञ्च च । कलायास्त्रिंशतः काष्ठा मात्राशीतिद्वय
शतघ्ने कानकास्त्रिंशन्मात्रास्त्रिंशत्षडुत्तरा । द्विषष्टिभाक्त्रयोविंशन्मात्रायां च चला भवे
चत्वारिंशत्सहस्राणि शतान्यष्टौ च विद्युतिः । सप्ततिं चापि तत्रैव नवतिं विद्धिनिश्चये
चत्वार्येव शतान्याहुर्विद्युतौ वैश्वसंयुगे । चरांशो ह्येषु विज्ञेयो नालिका चात्र कारण
संवत्सरादयः पञ्च चतुर्मानैर्विकल्पिताः । निश्चयः सर्वकालस्य युगमित्यभिधीयते ॥
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः । इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ॥
पञ्चमो वत्सरस्तेषां कालस्तु परिसंज्ञितः ॥

...शं शतं भवेत्पूर्णं पर्वणां तु रवेर्युगम् । एतान्यष्टादशस्त्रि(त्रिं)शदुदयो भास्करस्य च...
...तवस्त्रिंशतः सौरा अयनानि दशैव तु । पञ्चत्रिंशच्छतं चापि षष्टिर्मासाश्च भास्करः...
...शदेव त्वहोरात्रं स तु मासश्च भास्करः । एकषष्टिस्त्वहोरात्रा ऋतुरेको विभाव्यते
...हां तु त्र्यधिकाशीतिः शतं चाप्यधिकं भवेत् । मानं तच्चित्रभानोस्तु विज्ञेयं भुवनस्य
...रसौम्यं तु विज्ञेयं नाक्षत्रं सावनं तथा । नामान्येतानि चत्वारि यैः पुराणं विभाव्य
...तस्योत्तरतश्चैव शृङ्गवान्नाम पर्वतः । त्रीणि तस्य तु शृङ्गाणि स्पृशन्तीव नभस्तलम् ॥
...पि शृङ्गवान्नाम सर्वतश्चैव विश्रुतः । एकमार्गश्च विस्तारो विष्कम्भश्चापि कीर्तितः ।
...स्य वै पूर्वतः शृङ्गं मध्यमं तद्धिरण्मयम् । दक्षिणं राजतं चैव शृङ्गं तु स्फटिकप्रभम् ॥
...र्वरत्नमयं चैकं शृङ्गमुत्तरमुत्तमम् । एवं कूटैस्त्रिभिः शैलः शृङ्गवानिति विश्रुतः ॥
...वतं शृङ्गं तदर्कः प्रतिपद्यते । शरद्वसन्तयोर्मध्ये मध्यमां गतिमास्थितः ॥
...यामथो रात्रिं करोति तिमिरापहः ॥
...श्च हया दिव्यास्ते नियुक्ता महारथे । अनुलिप्ता इवाऽऽभान्ति पद्मरक्तैर्गभस्तिभिः ।
... च कुलान्ते च भास्करोदयतः स्मृताः । मुहुर्ता दश पञ्चैव अहो रात्रिश्च तावती ॥
...नां यदा सूर्यः प्रथमांशगतो भवेत् । विशाखानां तथा ज्ञेयश्चतुर्थांशे निशाकरः ॥
...खायां यदा सूर्यश्चरतेऽशं तृतीयकम् । तदा चन्द्रं विजानीयात्कृत्तिकाशिरसि स्थितम्
...न्तं तदा विद्यादेवमाहुर्महर्षयः । सूर्येण विषुवं विद्यात्कालं सोमेन लक्षयेत् ॥
...रात्रिरहश्चैव यदा तद्विषुवद्भवेत् । तदा दानानि देयानि पितृभ्यो विषुवत्यपि ॥
...भ्यो विशेषेण मुखमेतत्तु दैवतम् ॥
...धिमासौ च कलाकाष्ठ मुहूर्तकाः । पौर्णमासी तथा ज्ञेया अमावास्या तथैव च ।
... कुहूश्चैव राका चानुमतिस्तथा ॥
तपस्तपस्यौ मधुमाधवौ च शुक्रः शुचिश्चायनमुत्तरं स्यात् ।
नभो नभस्योऽथ ईषुः सहोर्जः सहःसहस्याविति दक्षिणं स्यात् ॥

१ ख. ग. ङ. °कोनिका° । २ ख विषुतः । घ. ङ. °वीयुतः । ३ घ. ङ. विद्धि । ४ घ. ङ. °द्युतो
५ ख. °नवक° । ६ क. विंशश° । ७ ग. ङ. त्रिंशं शतं । ८ ख. घ. °शशतं । ९ ख. ग. घ. ङ. °स्कराः त्रि° ।
...ङ. °भाव्यते । ११ क. घ. नक्षत्रं । १२ ख. ग. घ. ङ. शृङ्गैः स नगः शृङ्गवान्नाम वि° । १३ ङ. °कसर्ग° ।
...र्गस्य वि° । १५ क वै सर्वं । १६ क. ख. शैलैः । १७ घ. ङ. °तादृशमाचैव । १८ ख. ग. घ. ङ. °षुव...
...ख. घ. ङ. इषः ।

...ा ज्ञेयाः पञ्चाब्दा ब्रह्मणः सुताः । तस्मात्तु ऋतवो ज्ञेया ऋतवो ह्यन्तराः स्मृताः ॥
...ज्ञेया अमावास्याऽस्य पर्वणः । तस्मात्तु विषुवं ज्ञेयं पितृदेवहितं सदा ॥ २०४
...न मुह्येत दैवे पित्र्ये च मानवः । तस्मात्स्मृतं प्रजानां वै विषुवत्सर्वगं सदा ॥ २०५
...स्मृतो लोको लोकान्तो लोक उच्यते । लोकपालाः स्थितास्तत्र लोकालोकस्य मध्यतः
...हात्मानस्तिष्ठन्त्याभूतसंप्लवात् । सुधामा चैव वैराजः कर्दमः शङ्खपाँस्तथा ॥
...पर्जन्यः केतुमाञ्जतश्च यः ॥ २०७
...भीमाना निस्तन्द्रा निष्परिग्रहाः । लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिशम् ॥
...स्त्यस्य अजवीथ्याश्च दक्षिणम् । पितृयाणः स वै पन्था वैश्वानरपथाद्बहिः ॥ २०...
...प्रजावन्तो मुनयो ह्यग्निहोत्रिणः । लोकस्य संतानकराः पितृयाणे पथि स्थिताः
...तं कर्म आशिषा ऋत्विगुच्यते । प्रारभन्ते लोककामास्तेषां पन्थाः स दक्षिणः
...पुनर्धर्मं स्थापयन्ति युगे युगे । संतत्या तपसा चैव मर्यादाभिः श्रुतेन च ॥ २१...
...स्तु पूर्वे वै पश्चिमानां गृहेषु च । पश्चिमाश्चैव जायन्ते पूर्वेषां निधनेष्वपि ॥
...मानास्ते तिष्ठन्त्याभूतसंप्लवात् ॥ २...
...तिसहस्राणि मुनीनां गृहमेधिनाम् । सवितुर्दक्षिणं मार्गं श्रिता ह्याचन्द्रतारकम् ॥
...नां प्रसंख्येया ये श्मशानानि भेजिरे ॥ २...
...यवहारेण भूतारम्भकृतेन च । इच्छाद्वेषप्रवृत्त्या च मैथुनोपगमेन च ॥ २१...
...यकृतेनेह सेवनाद्विषयस्य च । एतैस्तैः कारणैः सिद्धाः श्मशानानि हि भेजिरे ॥
...स्ते मुनयो द्वापरेष्विह जज्ञिरे ॥ २१...
...श्च्युत्तरे यच्च सप्तर्षिभ्यश्च दक्षिणम् । उत्तरः सवितुः पन्था देवयानस्तु स स्मृतः ॥
...वासिनः सिद्धा विमला ब्रह्मचारिणः । सततं ते जुगुप्सन्ते तस्मान्मृत्युर्जितस्तु तैः...
...शीतिसहस्राणि तेषामप्यूर्ध्वरेतसाम् । उदक्पन्थानमर्यम्णः श्रिता ह्याभूतसंप्लवात् ॥
...प्रसङ्गात्तु लोकस्य मैथुनस्य तु वर्जनात् । इच्छाद्वेषनिवृत्त्या च भूतारम्भविवर्जनात् ॥
...श्च कामसंयोगाच्छब्दादेर्दोषदर्शनात् ) ॥ ॥
...कारणैः शब्दैस्तेऽमृतत्वं हि भेजिरे । आभूतसंप्लवस्थानममृतत्वं विभाव्यते ॥ ॥
...यस्थितिकालोऽयमपुनर्मार्गगामिनः । ब्रह्महत्याश्वमेधाभ्यां पुण्यपापकृतोऽपरम् ॥ ॥
...तसंप्लवान्ते तु क्षीयन्ते ह्यूर्ध्वरेतसः ॥
...तरमृषिभ्यस्तु ध्रुवो यत्रास्ति वै स्मृतम् । एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भा...
...वा न शोचन्ति तद्विष्णोः परमं पदम् । धर्मे ध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसा...

इति श्रीमहापुराणे वायुप्रोक्ते ज्योतिष्प्रचारो नाम पञ्चाशोऽध्यायः ॥ ५० ॥

आदितः श्लोकानां समष्ट्यङ्काः— ३८५४

---

* धनुश्चिह्नान्तर्गतग्रन्थः क. ग. पुस्तकयोर्नास्ति ।

१ क. घ. ङ. °स्माद्दतुमु° । २ क. ङ. °तृदैव° । ३ क. °शंकुपस्तथा° । ४ घ. ङ. °पात्तथा । ५ क. °नुजात... । ६ ख. ङ. °क्षिणाः । च । ७ क. °स्थानाम° । ८ ख. ग. घ. ङ. °भाव्यते । ९ ख. ग. घ. ङ. °मिनाम् । ब्र°... ङ. °वान्ते तु । ११ ख. ग. घ. ङ. °यत्र स वै स्मृतः । ए° ।

अथैकपञ्चाशोऽध्यायः ।

---

ज्योतिष्प्रचारः ।

सूत उवाच—

स्वायंभुवे निसर्गे तु व्याख्यातान्युत्तराणि तु । भविष्याणि च सर्वाणि तेषां वक्ष्
एतच्छ्रुत्वा तु मुनयः पप्रच्छुर्लोमहर्षणम् । सूर्याचन्द्रमसोश्चारं ग्रहाणां चैव सर्वशः

ऋषय ऊचुः—

भ्रमन्ते कथमेतानि ज्योतींषि दिवि मण्डलम् । तिर्यग्व्यूहेन सर्वाणि तथैवासंकरेण
कश्च भ्रामयते तानि भ्रमन्ति यदि वा स्वयम् ॥
एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम । भूतसंमोहनं त्वेतच्छ्रोतुमिच्छा प्रवर्तते ॥

सूत उवाच—

[भू]तसंमोहनं ह्येतद्ब्रुवतो मे निबोधत । प्रत्यक्षमपि दृश्यं यत्तत्संमोहयते प्रजाः ॥
[यो]ऽसौ चतुर्दिशं पुच्छे शैशुमारे व्यवस्थितः । उत्तानपादपुत्रोऽसौ मेढीभूतो ध्रुवो [दिव]
[स] हि भ्रमन्भ्रामयते चन्द्रादित्यौ ग्रहैः सह । भ्रमन्तमनुगच्छन्ति नक्षत्राणि च चक्रातनु
[त]स्य मनसा चासौ सर्पते भगणः स्वयम् । सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः स्
[वा]तानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै । तेषां योगश्च भेदाश्च कालचारस्तथैव च ॥
[अस्]तोदयौ तथोत्पाता अयने दक्षिणोत्तरे । विषुवद्ग्रहवर्णाश्च ध्रुवात्सर्वं प्रवर्तते ॥
[वर्षा] घर्मो हिमं रात्रिः संध्या चैव दिनं तथा । शुभाशुभं प्रजानां च ध्रुवात्सर्वं प्रवर्त
[ध्रुव]ाधिकृतांश्चैव सूर्योपावृत्य तिष्ठति । तदेष दीप्तकिरणः स कालाग्निर्दिवाकरः ॥
[परिव]र्तक्रमाद्विप्रा भाभिरालोकयन्दिशः । सूर्यः किरणजालेन वायुयुक्तेन सर्वशः ।
[जगतो] जलमादत्ते कृत्स्नस्य द्विजसत्तमाः ॥
[आदि]त्यपीतं सूर्याग्रेः सोमं संक्रमते जलम् । नाडीभिर्वायुयुक्ताभिर्लोकाधानं प्रवर्तते
[सो]मात्स्रवते सूर्यं तदभ्रेष्ववतिष्ठते । मेघा वायुनिघातेन विसृजन्ति जलं भुवि ॥
[एवमु]त्क्षिप्यते चैव पतते च पुनर्जलम् । न नाशमु(उ)दकस्यास्ति तदेव परिवर्तते ॥
[संधा]रणार्थं भूतानां मायैषा विश्वनिर्मिता । अनया मायया व्याप्तं त्रैलोक्यं सचराचर
[विश्वे]शो लोककृद्देवः सहस्रांशुः प्रजापतिः । धाता कृत्स्नस्य लोकस्य प्रभुर्विष्णुर्दिव ।
[सर्वेषां] [ण] ऋकमम्भो वै यत्सोमान्नभसश्च्युतम् । सोमाधारं जगत्सर्वमेतत्तथ्यं प्रकीर्तितम् ।
[सूर्या]त्क्षर्कं निस्रवते सोमाच्छीतं प्रवर्तते । शीतोष्णवीर्यौ द्वावेतौ युक्तौ धारयतो जग
[सो]मन्तपा नदी गङ्गा पवित्रा विमलोदका । सोमपुत्रपुरोगाश्च महानद्यो द्विजोत्तमाः ।
[भू]तशरीरेषु आपो ह्यनुगताश्च याः । तेषु संदह्यमानेषु जङ्गमस्थावरेषु च ॥
[धूम]भूतास्तु ता आपो निष्क्रामन्तीह सर्वशः ॥

---

१ ख. ग. घ. °भुवनि° । २ क. ङ. °च्छे शिशु° । ३ क. मेधी भू° । ४ ख. ग. ङ. °ते ज्यो[...]
[...]ख. ग ङ. °र्याग्निः सो° । ६ ख. ग. घ. ङ. °लोकधा° । ७ क. °सूर्यस्तदभ्रेष्व° । ८ ङ. °भ्रेष्वेव ति[...]
[...] नानाप्रकारमुदकं त° । १० क. °रः । सर्वे° । ११ क. °भसः श्रुत° । १२ ख. ग. घ. ङ. दुत[...]
[...]यते ज° । १४ ख. घ. °नुश्रिता° । ग. ङ. °नुसृता° ।

...र्विदु ...जायन्ते स्थानमत्राम्भसां स्मृतम् । आर्कं तेजो हि भूतेभ्यो ह्यादत्ते रश्मिभिर्जगृता:।
...राच्छा द्वीपाद्वहन्त्यापो गभस्तय: । यतस्त्वृतुवशात्काले परिवर्तो दिवाकर: ॥ २०४
...तु धारमेघेभ्य: शुक्ला: शुक्लगभस्तिभि: ॥ २२०५
...प्रवर्षन्त्यापो वायुना समुदीरिता: । सर्वभूतहितार्थाय वायुभिश्च समन्तत: ॥ २६
...गिरमासान्सर्वभूतविवृद्धये । वायव्यं स्तनितं चैव वैद्युतं चाग्निसंभवम् ॥ २६
...पे तु ...र्यतोर्मेघत्वं व्यञ्जयन्ति च । न भ्रश्यन्ति यतस्त्वापस्तदभ्रं कवयो विदु: ॥ २७
...घु ...त्पत्तिस्त्रिविधा योनिरुच्यते । आग्नेया ब्रह्मजाश्चैव पक्षजाश्च पृथग्विधा: ॥
...समाख्यातास्तेषां वक्ष्यामि संभवम् ॥ २८
...तज्जा: प्रोक्तास्तेषां तस्मात्प्रवर्तनम् । शीतदुर्दिनवाता ये स्वगुणास्ते व्यवस्थिता: २९
...हाश्च मत्तमातङ्गगामिन: । भूत्वा धरणिमभ्येत्य विचरन्ति रमन्ति च ॥ ३०
...ते मेघा एतेभ्यो जीवसंभवा: । विद्युद्गुणविहीनाश्च जलधाराविलम्बिन: ॥ ३१
...महाकाया आवहस्य वशानुगा: । क्रोशमात्राच्च वर्षन्ति क्रोशार्धादपि वा पुन: ॥ ३२
...म्बेषु वर्षन्ति च रमन्ति । बलाकागर्भदाश्चैव बलाकागर्भधारिण: ॥ ३३
...म ते मेघा ब्रह्मनिश्वाससंभवा: । ते हि विद्युद्गुणोपेता: स्तनयन्ति स्वनप्रिया: ॥ ३४
...णादेन भूमि: स्वाङ्गरुहोद्गमा । राज्ञी राज्ञाभिषिक्तेव पुनर्यौवनमश्नुते ॥
...तिमासक्ता भूतानां जीवितोद्भवा ॥ ३५
...म ते मेघा येभ्यो जीवस्य संभवा: । द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिता: ।
...नमात्राच्च सार्धार्धान्निष्कृतादपि । वृष्टिसर्गस्तथा तेषां धारासार: प्रकीर्तिता: ॥
...का नाम ये मेघा: पक्षसंभवा: ॥
...धश्छिन्ना ये पर्वतानां महौजसाम् । कामगानां प्रवृद्धानां भूतानां शिवमिच्छता ...
...शीति ते मेघा बृहन्तस्तोयमत्सरा: । पुष्करावर्तकास्तेन कारणेनेह शब्दिता: ॥
...पराश्चैव महाघोरतराश्च ते । कल्पान्तवृष्टे: स्रष्टार: संवर्ताग्नेर्नियामका: ॥
...श्च युगान्तेषु तृतीयास्ते प्रकीर्तिता: । अनेकरूपसंस्थाना: पूरयन्तो महीतलम् ॥
...वहन्त: स्युराश्रिता: कल्पसाधका: ॥
...ण्डकपालस्य प्राकृतस्याभवंस्तदा । तस्माद्ब्रह्मा समुत्पन्नश्चतुर्वक्त्र: स्वयंभुव: ॥
...तत्कपालस्य सर्वे मेघा: प्रकीर्तिता: ॥
...यनं धूम: सर्वेषामविशेषत: । तेषां श्रेष्ठस्तु पर्जन्यश्चत्वारश्चैव दिग्गजा: ॥
...र्वतानां च मेघानां भोगिभि: सह । कुलमेकं पृथग्भूतं योनिरेका जलं स्मृतम् ॥
...दिग्गजाश्चैव हेमन्ते शीतसंभवा: । तुषारवृष्टिं वर्षन्ति सर्वसस्यविवृद्धये ॥
...वहो नाम तेषां वायुरपाश्रय: । योऽसौ बिभर्ति भगवान्गङ्गामाकाशगोचराम् ।
...लां पुण्यां त्रिधां स्वर्गपथे स्थिताम् ॥ ४

---

...। ग. ङ. °युमिश्रै: स° । घ. °युभूतै: स° । २ ङ. आवह° । ३ ख. घ. ङ. राज्यामि° । ४ ख घ. ङ...
घ. ङ. °सार: प्र° । ६ घ. ङ. °तित: । पु° । ७ ख. ग. घ. ङ. परावहन्ते स्यु° । ८ ख. ग. घ. ज्ञात...
९ ख. घ. ङ. षष्ठ: । १० क. ग. ङ. °व्यापतिज । ११ क. र्ण्यां वियां एव° । १२ ग. घ. °ब्र° ...

...स्याविष्यन्दजं तोयं दिग्गजाः पृथुभिः करैः । शीकरं संप्रमुञ्चन्ति नीहार इति
दक्षिणेन गिरिर्योऽसौ हेमकूट इति स्मृतः । उदग्घिमवतः शैलादुत्तरस्य च दक्षि...
पुण्ड्रं नाम समाख्यातं नगरं तत्र वै स्मृतम् ॥
तस्मिन्निपतितं वर्षं यत्तुषारसमुद्भवम् । ततस्तदावहो वायुर्हिमशैलात्समुद्वहन् ॥
...आनयत्यात्मयोगेन सिच्यमानो महागिरिम् ॥
हिमवन्तमतिक्रम्य वृष्टिशेषं ततः परम् । इहाभ्येति ततः पश्चादपरान्तविवृद्धये ॥
मेघोवा(चाऽऽ)प्यायनं चैव सर्वमेतत्प्रकीर्तितम् । सूर्य एव तु वृष्टीनां स्रष्टा समु...
ध्रुवेणाऽऽवेष्टितः सूर्यस्ताभ्यां वृष्टिः प्रवर्तते । ध्रुवेणाऽऽवेष्टितो वायुर्वृष्टिं संहरते ।
ग्रहान्निःसृत्य सूर्यात्तु कृत्स्ने नक्षत्रमण्डले । चारस्यान्ते विशत्यर्कं ध्रुवेण परिवेष्टित...
अतः सूर्यरथस्याथ संनिवेशं निबोधत । संस्थितेनैकचक्रेण पञ्चारेण त्रिनाभिना...
हिरण्मयेन भगवान्पर्वणा तु महौजसा । नष्टवर्त्माऽन्धकारेण षट्प्रकारैकनेमिना...
चक्रेण भास्वता सूर्यः स्यन्दनेन प्रसर्पति ॥
दशयोजनसाहस्रो विस्तारायामतः स्मृतः । द्विगुणोऽस्य रथोपस्थादीषादण्डप्रमाणतस्तु...
स तस्य ब्रह्मणा सृष्टो रथो ह्यर्थवशेन तु । असङ्गः काञ्चनो दिव्यो युक्तः परमगैरश्व...
छन्दोभिर्वाजिरूपैस्तु यतः शुक्रस्ततः स्थितः । वरुणस्यन्दनस्येह लक्षणैः सदृशस्तु...
तेनासौ सर्पति व्योम्नि भास्वता तु दिवाकरः ॥
अथेमानि तु सूर्यस्य प्रत्यङ्गानि रथस्य तु । संवत्सरस्यावयवैः कल्पितानि यथाक्र...
..., नाभिः सूर्यस्य एकचक्रः स वै स्मृतः । आराः पञ्चर्तवस्तस्य नेमिः षड्ऋत...
...डः स्मृतो ह्यब्दस्त्वयने कूबरावुभौ । मुहूर्ता बन्धुरास्तस्य शम्या तस्य क...
...काष्ठाः स्मृता घोणा ईषादण्डः क्षणास्तु वै । निमेषाश्चानुकर्षोऽस्य ईषा चास्य...
...रूथो धर्मोऽस्य ध्वज ऊर्ध्वः समुच्छ्रितः । युगाक्षकोटी ते तस्य अर्थकामावु...
...वरूपाश्छन्दांसि वहन्ते वामतो धुरम् । गायत्री चैव त्रिष्टुप्च अनुष्टुब्जगती तथा...
...श्च बृहती चैव उष्णिक्चैव तु सप्तमम् । अक्षे चक्रं निबद्धं तु ध्रुवे त्वक्षः समार्पितः
...क्रो भ्रमत्यक्षः सहाक्षो भ्रमति ध्रुवः । अक्षः सहैव चक्रेण भ्रमतेऽसौ ध्रुवेरित...
...र्थवशात्तस्य संनिवेशो रथस्य तु । तथा संयोगभागेन संसिद्धो भास्वरो रथः ।
...सौ तरणिर्देवस्त्वरसा सर्पते दिवि । युगाक्षकोटिसंबद्धौ रश्मी द्वौ स्यन्दनस्य ॥
...ण भ्रमतो रश्मी विचक्रयुगयोस्तु वै । भ्रमतो मण्डलानि स्युः खेचरस्य रथस्य
...ाक्षकोटी ते तस्य दक्षिणे स्यन्दनस्य तु । ध्रुवेण संगृहीते वै द्विचक्रश्वेतरज्जुवत् ।
...न्तमनुगच्छेतां ध्रुवं रश्मी तु तावुभौ । युगाक्षकोटी ते तस्य वातोर्मी स्यन्दनस्य...
...लासक्तो यथा रज्जुर्भ्रमते सर्वतोदिशम् । ह्रसतस्तस्य रश्मी तौ मण्डलेषूत्तरायणे...
...र्धेते दक्षिणे चैव भ्रमतो मण्डलानि तु । ध्रुवेण संगृहीतौ तु रश्मी वै नयतो रवि...

१ ख. °त्र विश्रुत°। २ ख. ग. °मयन्तं समुद्भवम् । आ°। ... घ. ङ. °म्यसुष्टि°। ४ ख. घ... ङ. त्रिणाभि° । ६ ख. घ ङ. °वर्त्मोर्ध्वकान्तेन व° । ... ख. °तः शक्र° । ... शश्यते शक्रं । ङ. ... ख. ग. घ. ङ. °थो धर्मो । ... क ऊर्ध्वे स° । ख. ऊर्ध्व स° । ११ क. धुराम् । ... १३ ङ. ...

तौ वै ध्रुवेण समधिष्ठितौ । तदा सोऽभ्यन्तरं सूर्यो भ्रमते मण्डलानि तु ॥
तं काष्ठयोरुभयोश्चरन् । ध्रुवेण मुच्यमानाभ्यां रश्मिभ्यां पुनरेव तु ॥ ७५
सूर्यो भ्रमते मण्डलानि तु । उद्वेष्टयन्स वेगेन मण्डलानि तु गच्छति॥ ७६

ति श्रीमहापुराणे वायुप्रोक्तेऽनुषङ्गपादे ज्योतिष्प्रचारो नामैकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

आदितः श्लोकानां समष्ट्यङ्काः—३९१०

अथ द्विपञ्चाशोऽधययः ।

---

ज्योतिष्प्रचारः ।

...जाः वाच—

...हाश्च मत्तैर्वैरादित्यैर्ऋषिभिस्तथा । गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥ १
...ते मेष्वसूर्ये द्वौ द्वौ मासौ क्रमेण तु । धाताऽर्यमा पुलस्त्यश्च पुलहश्च प्रजापतिः ॥ २
...महाक...[1] संकीर्णारश्च तावुभौ । तुम्बुरुर्नारदश्चैव गन्धर्वौ गायतां वरौ ॥ ३
...म्बेषु ...श्चैव तथा वै पुञ्जिकस्थला[2] । ग्रामणी रथकृत्छ्रश्च तथौर्जश्चैव तावुभौ ॥ ४
...म ते ...हेतिश्च यातुधानावुदाहृतौ । मधुमाधवयोरेष गणो वसति भास्करे ॥ ५
...णादेमकौ मासौ मित्रश्च वरुणश्च ह । ऋषिरत्रिर्वशिष्ठश्च तक्षको रम्भ एव च ॥ ६
...तिमासथा च गन्धर्वौ च हहा हूहूः । रथस्वनश्च ग्रामण्यौ रथचित्रश्च तावुभौ ॥ ७
...म ते ...श्चैव यातुधानावुदाहृतौ । एते वसन्ति वै सूर्ये मासयोः शुचिक्रयोः ॥
...मात्राश्चस्त्वन्या निवसन्तीह देवताः । इन्द्रश्चैव विवस्वांश्च अङ्गिरा भृगुरेव च ॥
...का ना सर्पः शङ्खपालश्च तावुभौ । विश्वावसूग्रसेनौ च प्रातश्चैवारुणश्च ह ॥
...वा ...श्छिन्न विरूपातां निम्लोचेति च ते उभे । यातुधानस्तथा सर्पो व्याघ्रः श्वेतश्च
...वयोरेष गणो वसति भास्करे ॥
...रावृनः शुभ्रा वसन्ति मुनिदेवताः । पर्जन्याश्चाथ पूषा च भरद्वाजः सगौतमः ॥
...युगा...श्च गन्धर्वास्तथैव सुरभिश्च यः(या) । विश्वाची च घृताची च उभे ते शुभलक्षणे
...तश्चैव विभुतश्च धनंजयः । सेन(ना)जिच्च सुषेणश्च सेनानीर्ग्रामणीश्च तौ ॥
...ण्डकप...तावेतौ यातुधानावुभौ स्मृतौ । वसन्त्येते तु वै सूर्ये मासयोश्च इषोर्जयोः ॥
...तसंप्लकृपा...द्वौ मासौ वसन्ति तु दिवाकरे । अंशो भगश्च द्वावेतौ कश्यपश्च ऋतुश्च ह ॥
...हापद्मः सर्पः कर्कोटकस्तथा । चित्रसेनश्च गन्धर्व ऊर्णायुश्चैव तावुभौ ॥
...प्रचित्तिश्च तथैवाप्सरसौ शुभे । तार्क्ष्यश्चारिष्टनेमिश्च सेनानीर्ग्रामणीश्च तौ ॥
...श्च तावुग्रौ यातुधानावुदाहृतौ । सहे चैव सहस्ये च वसन्त्येते दिवाकरे॥ १९
...योश्चापि मासयोर्निवसन्ति वै । त्वष्टा विष्णुर्जमदग्निर्विश्वामित्रस्तथैव च ॥ २०
...था नागौ कम्बलाश्वतरावुभौ । गन्धर्वौ धृतराष्ट्रश्च सूर्यवर्चास्तथैव च ॥ २१

---

१ ख. ... घ. सकर्णीर° । — सकीर्णौ र° । २ ख. ग. घ. ङ. °स्थला प्स । ३ क. स्थली । प्रा° । ४ क. °थोयं श्चै° ... । ६ ख. ... ता ऽनुम्रो । ७ घ. ङ. भुजग° ।

...त्तमाप्सराश्चैव देवी रम्भा मनोरमा । ऋतजित्सत्यजिच्चैव ग्रामण्यौ लोका...
...ज्ञोपेतस्तथा दक्षो यज्ञोपेतश्च स स्मृतः । एते देवा वसन्त्यर्के द्वौ मासौ तु क्रमे...
...थानाभिमानिनो ह्येते गुणा द्वादश सप्तकाः । सूर्यमाप्याययन्त्येते तेजसा तेज उ...
...प्रथितैस्तैर्वचोभिस्तु स्तुवन्ति मुनयो रविम् । गन्धर्वाप्सरसश्चैव गीतनृत्यैरुपासते...
...ग्रामणीयक्षभूतास्तु कुर्वते भीमसंग्रहम् । सर्पा वहन्ति सूर्यं च यातुधाना * नु...
...ालखिल्या नयन्त्यस्तं परिचार्योदयाद्रविम् ॥
...तेषामेव देवानां यथावीर्यं यथातपः । यथायोगं यथासत्त्वं यथाधर्मं यथाबलम् ।
...था तपत्यसौ सूर्यस्तेषां सिद्धस्तु तेजसा । इत्येते वै वसन्तीह द्वौ द्वौ मासौ दि...
...षयो देवगन्धर्वाः पन्नगाप्सरसां गणाः । ग्रामण्यश्च तथा यक्षा यातुधानाश्च भूय...
...ते तपन्ति वर्षन्ति भान्ति वान्ति सृजन्ति च । भूतानामशुभं कर्म व्यपोहन्तीह के...
...नवानां शुभं ह्येते हरन्ति दुरितात्मनाम् । दुरितं हि प्रचाराणां व्यपोहन्ति क्वचित्...
...मानेऽवस्थिता दिव्ये कामगा वातरंहसः । एते । सहैव सूर्येण भ्रमन्ति दिवसानु...
...तश्च तपन्तश्च ह्लादयन्तश्च वै प्रजाः । गोपायन्ति तु भूतानि सर्वाणीहाऽऽमनुक्ष...
...ाभिमानिनामेतत्स्थानं मन्वन्तरेषु वै । अतीतानागतानां वै वर्तन्ते सांप्रतं तु...
...वसन्ति वै सूर्ये सप्तकास्ते चतुर्दशम् । चतुर्दशसु सर्गेषु गणा मन्वन्तरेषु च
ग्रीष्मे हिमे च वर्षासु च मुञ्चमानो धर्मं हिमं च वर्षं च दिनं निशां च ।
कालेन गच्छत्यृतुवशात्परिवृत्तरश्मिर्देवान्पितॄंश्च मनुजांश्च स तर्पयन्वै ॥
प्रीणाति देवानमृतेन सूर्यः सोमं सुषुम्नेन विवर्धयित्वा ।
शुक्ले तु पूर्णं दिवसक्रमेण तं कृष्णपक्षे विबुधाः पिबन्ति ॥
पीतं तु सोमं द्विकलावशिष्टं कृष्णक्षये रश्मिभिस्तं क्षरन्तम् ।
स्वधामृतं तत्पितरः पिबन्ति देवाश्च सौम्याश्च तथैव कव्यम् ॥
सूर्येण गोभिस्तु समुद्धृताभिरद्भिः पुनश्चैव समुद्धृताभिः ।
वृष्ट्याऽतिवृद्धाभिरथौषधीभिर्मर्त्याः क्षुधं त्वन्नपानैर्जयन्ति ॥
अमृतेन तृप्तिस्त्वर्धमासं सुराणां मासार्धतृप्तिः स्वधया पितॄणाम् ।
अन्नेन शश्वत्तु दधाति मर्त्याः सूर्यः स्वयं तच्च बिभर्ति गोभिः ॥
अयं हरिस्तैर्हरिभिस्तुरंगैमैरयन्हि चापो हरतीति रश्मिभिः ।
विसर्गकाले विसृजंश्च ताः पुनर्बिभर्ति शश्वत्सविता चराचरम् ॥
हरिर्हरिद्भिर्ह्रियते तुरङ्गैः पिबत्यथापो हरिभिः सहस्रधा ।
ततः प्रमुञ्चत्यपि तास्त्वसौ हरिः समुह्यमानो हरिभिस्तुरंगमैः
...चक्रेण सूर्यस्तुर्णं रथेन तु । भद्रैस्तैरक्षतैरश्वैः सर्पतेऽसौ दिवि क्षं...

* अत्र संधिरार्षः ।

...भीमसं । २ ख. ग. घ. मुख्यशः । ३ ख ग. घ. ङ. °तानां... °। ६ क. मू । सुधा° । ७ ग. ङ. मासं सुधा तु... १० ख. ग. घ. ङ. श्वत...

ततः पञ्चदशे भागे किंचिच्छिष्टे कलात्मके । अपराह्णे पितृगणैर्जघन्यः पर्युपास्यते ॥ ६६
पिबन्ति द्विकलं कालं शिष्टा तस्य तु या कला । निःसृतं तदमावास्यां गभस्तिभ्यः स्वधामृतम् ।
तां स्वधां मासतृप्त्यै तु पीत्वा गच्छन्ति तेऽमृतम् ॥ ६६
सौम्या बर्हिषदश्चैव अग्निष्वात्तास्तथैव च । कव्याश्चैव तु ये प्रोक्ताः पितरः सर्व एव ते ॥ ६७
संवत्सरास्तु वै कव्याः पञ्चाब्दा ये द्विजैः स्मृताः । सौम्यास्तु ऋतवो ज्ञेया मासा बर्हिषदः स्मृताः ।
अग्निष्वात्ता(त्त)र्तवश्चैव पितृसर्गा हि वै द्विजाः ॥ ६८
पितृभिः पीयमानस्य पञ्चदश्यां कला तु वै । यावन्न क्षीयते तस्य भागः पञ्चदशस्तु सः ॥ ६९
अमावास्यां तदा तस्य अन्तमापूर्यते परम् । वृद्धिक्षयौ वै पक्षादौ षोडश्यां शशिनः स्मृतौ ॥
एवं सूर्यनिमित्तैषां क्षयवृद्धिर्निशाकरे । ताराग्रहाणां वक्ष्यामि स्वर्भानोश्च रथं पुनः ॥ ७१
तोयतेजोमयः शुभ्रः सोमपुत्रस्य वै रथः । युक्तो हयैः पिशङ्गैस्तु अष्टाभिर्वातरंहसैः ॥ ७२
सवरूथः सानुकर्षः सूतो दिव्यो रथे महान् । सोपासङ्गपताकस्तु सध्वजो मेघसंनिभः ॥ ७३
भार्गवस्य रथः श्रीमांस्तेजसा सूर्यसंनिभः । पृथिवीसंभवैर्युक्तैर्नानावर्णैर्हयोत्तमैः ॥ ७४
श्वेतः पिशङ्गः सारङ्गो नीलः पीतो विलोहितः । कृष्णश्च हरितश्चैव पृषतः पृश्निरेव च ॥
दशभिस्तैर्महाभागैरकृशैर्वातवेगितैः ॥ ७५
अष्टाश्वः काञ्चनः श्रीमान्सोमस्यापि रथोऽभवत् । असङ्गैर्लोहितैरश्वैः सर्वगैरग्निसंभवैः ॥
सर्पतेऽसौ कुमारो वै ऋजुवक्रानुचक्रगः ॥ ७६
ततस्त्वाङ्गिरसो विद्वान्देवाचार्यो बृहस्पतिः । शोणैरश्वैः काञ्चनेन स्यन्दनेन प्रसर्पति ॥ ७७
युक्तस्तु वाजिभिर्दिव्यैरष्टाभिर्वातसंमितैः । नक्षत्रेऽब्दं निवसति सर्वगस्तेन गच्छति ॥ ७८
ततः शनैश्चरोऽप्यश्वैः शबलैर्व्योमसंभवैः । कार्ष्णायसं समारुह्य स्यन्दनं याति वै शनैः ॥ ७९
स्वर्भानोस्तु तथैवाश्वाः कृष्णा ह्यष्टौ मनोजवाः । रथं तमोमयं तस्य सकृद्युक्ता वहन्त्युत ॥ ८०
आदित्यान्निःसृतो राहुः सोमं गच्छति पर्वसु । आदित्यमेति सोमाच्च पुनः सौरेषु पर्वसु ॥ ८१
अथ केतुरथस्याश्वा अष्टाष्टौ वातरंहसः । पलालधूमसंकाशाः शबला रासभारुणाः ॥ ८२
एते वाहा ग्रहाणां वै मया प्रोक्ता रथैः सह । सर्वे ध्रुवनिबद्धास्ते प्रबद्धा वातरश्मिभिः ॥ ८३
एते वै भ्राम्यमाणास्तु यथायोगं भ्रमन्ति वै । वायव्याभिरदृश्याभिः प्रबद्धा वातरश्मिभिः ॥ ८
परिभ्रमन्ति तद्बद्धाश्चन्द्रसूर्यग्रहा दिवि । भ्रमन्तमनुगच्छन्ति ध्रुवं ते ज्योतिषां गणाः ॥ ८५
यथा नद्युदके नौस्तु सलिलेन सहोह्यते । तथा देवालया ह्यते उह्यन्ते वातरश्मिभिः ॥ ८०
तस्मात्सर्वेण दृश्यन्ते व्योम्नि देवगणास्तु ते ॥ ८
यावत्यश्चैव तारास्तु तावन्तो वातरश्मयः । सर्वा ध्रुवनिबद्धास्ता भ्रमन्त्यो भ्रामयन्ति तम्
... भ्रमद्भ्रामयते यथा । तथा भ्रमन्ति ज्योतींषि वातबद्धानि सर्वशः ॥

नैर्विषिमान्धर्मपुत्रस ... स्वराः ।
हृत्तेजाः स्मृतो ... ख.

...का' । २ ख. ग. घ. ङ. काव्याः पञ्चाद्या ये । ३ क. 'युक्तो नाना' । ४ क. ङ. पृश्निरे° । ५ ख.
१ ख ग. 'भित६ घ. °वक्त्रानुवक्त्रगः । ७ ख. ग. घ. ङ. 'तुशतस्या' । ८ ग. ङ. 'याऽऽकान्तार°' । ९ ख. ग.
...घ. ङ. °भ्राण्योर्वि° ।ो भ्रामयन्ति तत् । त°।

अलातचक्रवद्यान्ति वातचक्रेरितानि तु । यस्माज्ज्योतींषि वहते प्रवहंस्तेन स स्मृतः ॥ ८९
एवं ध्रुवनिबद्धोऽसौ सर्पते ज्योतिषां गणः । सैष तारामयो ज्ञेयः शिशुमारो ध्रुवो दिवि ।
यदह्ना कुरुते पापं दृष्ट्वा तं निशि मुच्यते ॥ ९०
यावत्यश्चैव तारास्ताः शिशुमाराश्रिता दिवि । तावन्त्येव तु वर्षाणि जीवन्त्यभ्यधिकानि तु ॥
शाश्वतः शिशुमारोऽसौ विज्ञेयः प्रविभागशः । उत्तानपादस्तस्याथ विज्ञेयो ह्युत्तरो हनुः ॥
यज्ञोऽधरस्तु विज्ञेयो धर्मो मूर्धानमाश्रितः । हृदि नारायणः साध्य(ध्या) अश्विनौ पूर्वपादयोः॥
वरुणश्चार्यमा चैव पश्चिमे तस्य सक्थिनी । शिशुः संवत्सरस्तस्य मित्रोऽपाने समाश्रितः ॥
पुच्छेऽग्निश्च महेन्द्रश्च मरीचिः कश्यपो ध्रुवः । तारकाः शिशुमारश्च नास्तमेति चतुष्टयम् ॥ ९५
नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह । उन्मुखाभिमुखाः सर्वे चक्रीभूताश्रिता दिवि ॥ ९६
ध्रुवेणाधिष्ठिताः सर्वे ध्रुवमेव प्रदक्षिणम् । प्रयान्तीह वरं श्रेष्ठं मेढीभूतं ध्रुवं दिवि ॥ ९७
ध्रुवाग्निकश्यपानां तु वरश्चासौ ध्रुवः स्मृतः । एक एव भ्रमत्येष मेरुपर्वतमूर्धनि ॥ ९८
ज्योतिषां चक्रमेतद्धि सदा कर्षत्यवाङ्मुखः । मेरुमालोकयँत्येष प्रयातीह प्रदक्षिणम् ॥ ९९

इति श्रीमहापुराणे वायुप्रोक्ते ध्रुवचर्या नाम द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०२९

---

अथ त्रिपञ्चाशोऽध्यायः ।

---

ज्योतिःसंनिवेशः ।

शांशपायन उवाच—
एतच्छ्रुत्वा तु मुनयः पुनस्ते संशयान्विताः । पप्रच्छुरुत्तरं भूयस्तदा ते लोमहर्षणम् ॥ १

ऋषय ऊचुः—
यदेतदुक्तं भवता गृहाण्येतानि विश्रुतम् । कथं देवगृहाणि स्युः कथं ज्योतींषि वर्णय ॥ २
एतत्सर्वं समाचक्ष्व ज्योतिषां चैव निश्चयम् । श्रुत्वा तु वचनं तेषां तदा सूतः समाहितः ॥ ३
अस्मिन्नर्थे महाप्राज्ञैर्यदुक्तं ज्ञानबुद्धिभिः । तद्वोऽहं संप्रवक्ष्यामि सूर्याचन्द्रमसोर्भवम् ॥
यथा देवगृहाणीह सूर्याचन्द्रमसोर्गृहम् ॥
अतःपरं त्रिविधाग्नेर्वक्ष्येऽहं तु समुद्भवम् । दिव्यस्य भौतिकस्याग्नेराप्याग्नेः पार्थिवस्य च ॥ ६
व्युष्टायां तु रजन्यां वै ब्राह्मणोऽव्यक्तजन्मनः । [*अव्याकृतमिदं त्वासीन्नैशेन तमसाऽऽवृतम्
भूतावशिष्टेऽस्मिन्पार्थिवः सोऽग्निरुच्यते । यश्चाऽऽदौ तपते सूर्ये शुचिरग्निस्तु स स्मृतः] ॥
...ाख्यस्तु विज्ञेयस्तेषां वक्ष्येऽथ लक्षणम् । वैद्युतो जाठरः सौरो ह्यपां गर्भास्त्रयोऽग्नयः
...पः पिबन्सूर्यो गोभिर्दीप्यत्यसौ दिवि ॥

*धनुश्चिह्नान्तर्गतग्रन्थः ख ग. पुस्तकयोर्नास्ति ।

१ ख. घ. सर्पति । २ ख. घ. ङ °ऽग्नानं स° । ३ क. °मेधीभू° । ४ ख. ङ. वि । अग्नि... ...मीग्रक° । ५ ख. घ. ङ. °यन्नेव पर्येती° । ६ ग. ङ. °श उ° । ७ ख. °नि त्रिप्रुतः । क° । ग. ... ...नि त्रिप्रुत । क° । ८ ङ.विप्लुत° । ९ ख.घ. ङ. °र्थे त्वमा° । १० ङ. °हाप्रज्ञै° । ११ ख. °गृ... ...ग्नेः । १३ घ. °तः । विद्युताक्षस्तु । १४ घ. °क्ष्ये तु ल° ।

वैद्युतेन समाविष्टो वार्क्षो नाद्भिः प्रशाम्यति । मानवानां च कुक्षिस्थो नाद्भिः शाम्यति पावकः
अर्चिष्मान्[3]परमः सोऽग्निः प्रभवो जाठरः स्मृतः । यश्चायं मण्डली शुक्रो निरूष्मा संप्रकाशते
प्रभा हि सौरी पादेन ह्यस्तं याति दिवाकरे । अग्निमाविशते रात्रौ तस्माद्दूरात्प्रकाशते ॥ ११
उद्यन्तं च पुनः सूर्यमौष्ण्यमाग्नेयमाविशत् । पादेन पार्थिवस्याग्नेस्तस्मादग्निस्तपत्यसौ ॥ १२
प्रकाशश्च तथौष्ण्यं च सौराग्नेये तु तेजसी । परस्परानुप्रवेशादाप्यायेते दिवानिशम् ॥ १३
उत्तरे चैव भूम्यर्धे तस्मादस्मिंश्च दक्षिणे । उत्तिष्ठति पुनः सूर्ये रात्रिराविशते त्वपः ॥
तस्मात्ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात् ॥ १४
अस्तं याति पुनः सूर्ये अहर्वै प्रविशत्यपः । तस्मान्नक्तं पुनः शुक्ला आपो विशन्ति भास्करे ॥
एतेन क्रमयोगेन(ण) भूम्यर्धे दक्षिणोत्तरे । उदयास्तमये नित्यमहोरात्रं विशत्यपः ॥ १६
यश्चासौ तपते सूर्यः पिबन्नम्भो गभस्तिभिः । पार्थिवो हि विमिश्रोऽसौ दिव्यः शुचिरिति स्मृतः
सहस्रपादः सोऽग्निस्तु वृत्तः कुम्भनिभः शुचिः । आदत्ते तत्तु रश्मीनां सहस्रेण समन्ततः ॥
नादेयीश्चैव सामुद्रीः कौप्याश्चैव सधान्वनीः । स्थावरा जङ्गमाश्चैव यश्च सूर्यो हिरण्मयः ॥
तस्य रश्मिसहस्रं तु वर्षशीतोष्णनिस्रवम् ॥ १९
तासां चतुःशता नाड्यो वर्षन्ति चित्रमूर्तयः । वन्दनाश्चैव वन्द्याश्च ऋतना नूतनास्तथा ॥
अमृता नामतः सर्वा रश्मयो वृष्टिसर्जनाः ॥ २०
हिमवाहाश्च ताभ्योऽन्या रश्मयस्त्रिशताः पुनः । दृश्या मेध्याश्च बाह्याश्च ह्रादिन्यो हिमसर्जनाः
चन्द्रास्ता नामतः सर्वाः पीताभास्तु गभस्तयः । शुक्लाश्च कर्कुभश्चैव गावो विश्वभृतस्तथा ॥
शुक्लास्ता नामतः सर्वास्त्रिशता धर्मसर्जनाः । समं बिभर्ति ताभिस्तु मनुष्यपितृदेवताः ॥ २३
मनुष्यानौषधेनेह स्वधया च पितॄनपि । अमृतेन सुरान्सर्वांस्त्रींस्त्रिभिस्तर्पयत्यसौ ॥ २४
वसन्ते चैव ग्रीष्मे च स तैः सुतपते त्रिभिः । वर्षास्वथो शरदि च चतुर्भिः संप्रकर्षति ॥ २५
हेमन्ते शिशिरे चैव हिमं स सृजते त्रिभिः । ओषधीषु बलं धत्ते स्वधया च पितॄनपि ॥
सूर्योऽमरत्वममृतत्रयं त्रिषु नियच्छति ॥ २६
एवं रश्मिसहस्रं तत्सौरं लोकार्थसाधकम् । भिद्यते ऋतुमासाद्य जलशीतोष्णनिस्रवम् ॥ २७
इत्येतन्मण्डलं शुक्लं भास्वरं सूर्यसंज्ञितम् । (*नक्षत्रग्रहसोमानां प्रतिष्ठा योनिरेव च ॥
ऋक्षचन्द्रग्रहाः सर्वे विज्ञेयाः सूर्यसंभवाः ॥ २८
नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः । शेषाः पञ्च ग्रहा ज्ञेया ईश्वराः कामरूपिणः ॥ २९
पठ्यते चाग्निरादित्य उदकश्चन्द्रमाः स्मृतः । शेषाणां प्रकृतिं सम्यग्वर्ण्यमानां निबोधत ॥ ३०
सुरसेनापतिः स्कन्दः पठ्यतेऽङ्गारको ग्रहः । नारायणं बुधं प्राहुर्देवं ज्ञानविदो विदुः ॥ ३१

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तके नास्ति ।

नाग्निः प्र° । २ ग. ङ. नाग्निः शा° । ३ ग. घ. ङ. पवनः सोऽग्निर्निःप्रभो जा° । ४ ख. भास्वराः । . घ. ङ. वृत्तकु° । ६ ख. ग. घ. ङ. नाडीनां । ७ ख. °यस्त्रिश° । ८ ग. घ. मेध्य । ९ ख. । १० ख. घ. शुक्लाश्च । ११ ख. घ. °कुभाश्चै° । १२ ख. घ. शुक्लास्ता । १३ ख. सर्वान्रश्मिभि° १ ख ग. °नित्स त° । १५ ख. ग. घ. ङ. °मृतैस्त्रयस्त्रिषु । १६ ख. घ. ङ. जलाच्छीतो° । १७ ख. °क्लं सोमं सौम्य घ. ङ. °त्राण्योवि° ॥ १८ क. ग. °स्य औद° । १९ ख. घ. ङ. बुधाः ।

रुद्रो वैवस्वतः सक्षाद्धर्मो[2] लोके प्रभुः स्वयम् । महाग्रहो द्विजश्रेष्ठो[3] मन्दगामी शनैश्चरः ॥ ३२

देवासुरगुरू द्वौ तु भानुमन्तौ महाग्रहौ । प्रजापतिसुतावेतावुभौ शुक्रबृहस्पती[4] ॥
दैत्यो महेन्द्रश्च तयोराधिपत्ये विनिर्मितौ ॥ ३३

आदित्यमूलमखिलं त्रिलोकं[5] नात्र संशयः । भवत्यस्य जगत्कृत्स्नं सदेवासुरमानुषम् ॥ ३४
रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्रास्त्रिदिवौकसाम् । द्युतिर्द्युतिमतां कृत्स्ना यत्तेजः सार्वलौकिकम् ॥
सर्वात्मा सर्वलोकेशो मूलं परमदैवतम् । ततः संजायते सर्वं तत्र चैव प्रलीयते ॥ ३६
भावाभावौ हि लोकानामादित्यान्निःसृतौ पुरा । जगज्ज्ञेयो ग्रहो विप्रा दीप्तिमान्सुग्रहो रविः ॥ ३७
यत्र गच्छन्ति निधनं जायन्ते च पुनः पुनः । क्षणा मुहूर्ता दिवसा निशाः पक्षाश्च कृत्स्नशः ॥
मासाः संवत्सराश्चैव ऋतवोऽब्दयुगानि च । ३८

तदादित्यादृते तेषां[6] कालसंख्या न विद्यते । कालादृते न निगमो न दीक्षा नाह्निकक्रमः ॥ ३९
ऋतूनामविभागश्च पुष्पमूलफलं कुतः । कुतः सस्याभिनिष्पत्तिर्गुणौषधिगणादि वा ॥ ४०
अभावो व्यवहाराणां देवानां दिवि चेह च । जगत्प्रतापनमृते भास्करं वारितस्करम् ॥ ४१
स एव कालश्चाग्निश्च द्वादशात्मा प्रजापतिः । तपत्येष द्विजश्रेष्ठास्त्रैलोक्यं सचराचरम् ॥ ४२
स एष तेजसां राशिः समस्तः सार्वलौकिकः । उत्तमं मार्गमास्थाय वायोर्भाभिरिदं जगत् ॥
पार्श्वमूर्ध्वमधश्चैव तापयत्येष सर्वशः । ४३
रवेरश्मिसहस्रं यत्प्राङ्मया समुदाहृतम् । तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ॥ ४४
सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च । विश्वश्रवाः पुनश्चान्यः संयद्वसुरतः परम् ॥
अर्वाग्वसुः पुनश्चान्यो[7] मया चात्र प्रकीर्तितः ॥ ४५
सुषुम्नः सूर्यरश्मिस्तु क्षीणं शशिनमेधयन् । तिर्यगूर्ध्वप्रचारोऽसौ सुषुम्नः परिकीर्त्यते ॥ ४६
हरिकेशः पुरस्ताद्यो[8] ऋक्षयोनिः[10] प्रकीर्त्यते[11] । दक्षिणे विश्वकर्मा तु रश्मिर्वर्धयते बुधम् ॥ ४७
विश्वश्रवास्तु यः पश्चाच्छुक्रयोनिः स्मृता[12] बुधैः । संयद्वसुश्च यो रश्मिः सा योनिर्लोहितस्य तु ।
षष्ठस्त्वर्वाग्वसू रश्मिर्योनिस्तु स बृहस्पतेः । शनैश्चरं पुनश्चापि रश्मिराप्यायते स्वराट् ॥ ४९

एवं सूर्यप्रभावेन[14] ग्रहनक्षत्रतारकाः । वर्धन्ते विदिताः सर्वा विश्वं चेदं पुनर्जगत् ॥
न क्षीयन्ते पुनस्तानि तस्मान्नक्षत्रता स्मृता ॥ ५०
क्षेत्राण्येतानि वै पूर्वमापतन्ति गभस्तिभिः । तेषां क्षेत्राण्यथाऽऽदत्ते सूर्यो नक्षत्रतां[15] गतः ॥ ५१
तीर्णानां सुकृतेनेह सुकृतान्ते[16] ग्रहाश्रयात् । ताराणां तारका ह्येताः शुक्लत्वाच्चैव तारकाः ॥ ५२
दिव्यानां पार्थिवानां च नैशानां चैव सर्वशः । आदानान्नित्यमादित्यस्तमसां तेजसां महान् ॥
सुवति स्पन्दनार्थे च धातुरेष विभाव्यते । सवनात्तेजसोऽपां च तेनासौ सवि[ता ...]
बह्वर्थश्चन्द्र इत्येष ह्लादने धातुरिष्यते । शुक्लत्वे चामृतत्वे च शीतत्वे च विभा[...]

१ ख ग. घ. ङ. °क्षायमो लो° । २ क. लोके प्र° । ३ घ. ङ °श्रेष्ठाम° । ४ ख. घ. ङ.[...]
°तौ । देवो म° । ५ घ त्रैलोक्यं । ६ ख. येषा । ७ ख. घ. ङ. °श्चान्यः स्वराडन्यः प्र° । ८ क[...]
घ. पुनस्त्वाद्य ऋ° । १० घ. °निः स की° । ११ ख. कीर्तिता । द° । १२ ख. घ. ङ. स्मृतो बु° ।[...]
क. °वेण प्र° । १५ ख. ग. घ. ङ. °त्रतागतः । १६ ग. ङ. °न्ते गृहा° ।

सूर्याचन्द्रमसोर्दिव्ये मण्डले भास्वरे खगे । ज्वलत्तेजोमये शुक्ले वृत्तकुम्भनिभे शुभे ॥ ९६
घनतोयात्मकं तत्र मण्डलं शशिनः स्मृतम् । घनतेजोमयं शुक्लं मण्डलं भास्करस्य तु ॥ ९७
विशन्ति सर्वदेवास्तु स्थानान्येतानि सर्वशः । मन्वन्तरेषु सर्वेषु ऋक्षसूर्यग्रहाश्रयाः ९८
तानि देवगृहाण्येव तदाख्यास्ते भवन्ति च । ) सौरं सूर्यो विशः स्थानं सौम्यं सोमस्तथैव च॥
शौक्रं शुक्रो विशः स्थानं षोडशार्चिः प्रतापवान् । बृहद्बृहस्पतिश्चैव लोहितं चैव लोहितः
शानैश्चरं तथा स्थानं देवश्चैव शनैश्चरः ॥ ६०
आदित्यरश्मिसंयोगात्संप्रकाशात्मिकाः स्मृताः । नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः
त्रिगुणस्तस्य विस्तारो मण्डलं च प्रमाणतः । द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः ॥
तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाऽधस्तात्प्रसर्पति । उद्धृत्य पार्थिवच्छायां निर्मितो मण्डलाकृतिः ॥
स्वर्भानोस्तु बृहत्स्थानं निर्मितं यत्तमोमयम् । आदित्यात्तच्च निष्क्रम्य सोमं गच्छति पर्वसु ॥
आदित्यमेति सोमाच्च पुनः सोमं च पर्वसु । स्वर्भासा नुदते यस्मात्ततः स्वर्भानुरुच्यते ॥ ६५
चन्द्रस्य षोडशो भागो भार्गवश्च विधीयते । विष्कम्भान्मण्डलाच्चैव योजनाग्रात्प्रमाणतः ॥ ६६
भार्गवात्पादहीनस्तु विज्ञेयो वै बृहस्पतिः । बृहस्पतेः पादहीनौ कुजसौरावुभौ स्मृतौ ॥
विस्तारान्मण्डलाच्चैव पादहीनस्तयोर्बुधः ॥ ६७
तारानक्षत्ररूपाणि वपुष्मन्तीह यानि वै । बुधेन समतुल्यानि विस्तारान्मण्डलादथ ॥ ६८
प्रायशश्चन्द्रयोगीनि(णि) विद्यादृक्षाणि तत्त्ववित् । तारानक्षत्ररूपाणि हीनानि तु परस्परम् ॥
शतानि पञ्च चत्वारि त्रीणि द्वे चैव योजने । पूर्वापरनिकृष्टानि तारकामण्डलानि तु ॥
योजनान्यर्धमात्राणि तेभ्यो ह्रस्वं न विद्यते ॥ ७०
उपरिष्टात्त्रयस्तेषां ग्रहा ये दूरसर्पिणः[3] । सौरोऽङ्गिराश्च वक्रश्च ज्ञेया मन्दविचारिणः ॥ ७१
तेभ्योऽधस्ताच्च चत्वारः पुनरन्ये महाग्रहाः । सूर्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः ॥ ७२
यावन्त्यस्तारकाः कोट्यस्तावदृक्षाणि सर्वशः । वीथीनां नियमाच्चैवर्क्षमार्गो व्यवस्थितः ॥
गतिस्तास्वेव सूर्यस्य नीचोच्चत्वेऽयनक्रमात् । उत्तरायणमार्गस्थो यदा पर्वसु चन्द्रमाः ॥
ऊर्ध्वं बौधोऽथ स्वर्भानुः स्वर्भानोः स्थानमास्थितः ॥ ७४
नक्षत्राणि च सर्वाणि नक्षत्राणि विशन्त्युत । गृहाण्येतानि सर्वाणि ज्योतींषि सुकृतात्मनाम्
कल्पादौ संप्रवृत्तानि निर्मितानि स्वयंभुवा । स्थानान्येतानि तिष्ठन्ति यावदाभूतसंप्लवम् ॥
मन्वन्तरेषु सर्वेषु देवतायतनानि वै । अभिमानिनोऽवतिष्ठन्ति[6] स्थानानि तु पुनःपुनः ॥ १
अतीतैस्तु सहातीता भाव्या भाव्यैः सुरासुरैः । वर्तन्ते वर्तमानैश्च स्थानानि स्वैः सुरैः सह
अस्मिन्मन्वन्तरे चैव ग्रहा वैमानिकाः स्मृताः । विवस्वानदितेः पुत्रः सूर्यो वैवस्वतेऽन्तरे ॥ २
त्विषिमान्धर्मपुत्रस्तु सोमदेवो वसुः स्मृतः । शुक्रो देवस्तु विज्ञेयो भार्गवोऽसुरयाजकः ॥ ३
बृहत्तेजाः स्मृतो देवो देवाचार्योऽङ्गिरःसुतः । बुधो मनोहरश्चैव त्विषिपुत्रस्तु स स्मृतः ॥ ८

१ ख ग. 'र्मिता म' । २ ख. ग घ. ङ. 'नः सौरेषु प' । ३ ख. घ. 'रूपिणः । ४ ख. घ. 'मृगमा' । ५ ख. ग. घ. ङ. 'त्राण्योवि' । ६ 'न्ति यावदभूतसंप्लवम् । अ' । ७ क. 'रराज' ।

अग्निविकलात्संजज्ञे युवाऽसौ लोहिताधिपः । नक्षत्रऋक्षगामिन्यो दाक्षायण्यः स्मृतास्तु ताः ॥
स्वर्भानुः सिंहिकापुत्रो भूतसंतापनोऽसुरः । सोमर्क्षग्रहसूर्ये तु कीर्तितास्त्वभिमानिनः ॥ ८३
स्थानान्येतान्यथोक्तानि स्थानिन्यश्चैव देवताः । शुक्रमग्निमयं स्थानं सहस्रांशोर्विवस्वतः ॥ ८४
सहस्रांशोस्त्विषः स्थानमम्मयं शुक्रमेव च[1] । आप्यं[3] श्यामं मनोज्ञस्य पञ्चरश्मेर्गृहं स्मृतम् ॥ ८५
शुक्रस्याप्यम्मयं स्थानं[4] सद्म षोडशरश्मिवत् । नवरश्मेस्तु यूनो हि लोहितस्थानमम्मयम् ॥ ८६
हरिश्चा(चाऽऽ)प्यं बृहच्चापि द्वादशांशोर्बृहस्पतेः । अष्टरश्मेर्गृहं प्रोक्तं कृष्णं बुधस्य अम्मयम् ॥ ८७
स्वर्भानोस्तामसं स्थानं भूतसंतापनालयम् । विज्ञेयास्तारकाः सर्वास्त्वम्मयास्त्वेकरश्मयः ॥ ८८
आश्रयाः पुण्यकीर्तीनां सुशुक्लाश्चैव वर्णतः । घनतोयात्मिका ज्ञेयाः कल्पादौ वेदनिर्मिताः ॥
उच्चत्वाद्दृश्यते शीघ्रमभिव्यक्तैर्गभस्तिभिः । तथा दक्षिणमार्गस्थो नीचैर्वीथीसमाश्रितः ॥ ९०
भूमिलेखावृतः सूर्यः पूर्णिमावास्ययोस्तथा । न दृश्यते यथाकालं शीघ्रमस्तमुपैति च ॥ ९१
तस्मादुत्तरमार्गस्थो ह्यमावास्यां निशाकरः । दृश्यते दक्षिणे मार्गे नियमाद्दृश्यते न च ॥ ९२
ज्योतिषां गतियोगेन सूर्याचन्द्रमसावुभौ । समानकालास्तमयौ विषुवत्सु समोदयौ ॥ ९३
उत्तरासु च वीथीषु व्यन्तरास्तमयोदयौ । पौर्णि(पूर्णा)मावास्ययोर्ज्ञेयौ ज्योतिश्चक्रानुवर्तिनौ[11][12] ॥
दक्षिणायनमार्गस्थो यदा भवति रश्मिवान् । तदा सर्वग्रहाणां स सूर्योऽधस्तात्प्रसर्पति ॥ ९५
विस्तीर्णं मण्डलं कृत्वा तस्योर्ध्वं*चरते शशी । नक्षत्रमण्डलं कृत्स्नं सोमादूर्ध्वं प्रसर्पति ॥ ९६
नक्षत्रेभ्यो बुधश्चोर्ध्वं[13] बुधादूर्ध्वं बृहस्पतिः । तस्माच्छनैश्चरश्चोर्ध्वं तस्मात्सप्तर्षिमण्डलम् ॥
ऋषीणां चैव सप्तानां ध्रुव ऊर्ध्वं व्यवस्थितः ॥ ९
द्विगुणेषु सहस्रेषु योजनानां शतेषु च । ताराग्रहान्तराणि स्युरुपरिष्टाद्यथाक्रमम् ॥ ९
ग्रहाश्च चन्द्रसूर्यौ तु दिवि दिव्येन तेजसा । नित्यमृक्षेषु युञ्जन्ति गच्छन्ति नियमक्रमात् ।
ग्रहनक्षत्रसूर्यास्तु नीचोच्चमृद्व्यवस्थिताः । समागमे च[16] भेदे च पश्यन्ति युगपत्प्रजाः ॥ १००
परस्परस्थिता ह्येते युज्यन्ते च परस्परम् । असंकरेण विज्ञेयस्तेषां योगस्तु वै बुधैः ॥ १०१
इत्येष संनिवेशो वः पृथिव्यां ज्योतिषस्य च । द्वीपानामुदधीनां च पर्वतानां तथैव च ॥ १०२
वर्षाणां च नदीनां च ये[17] च तेषु वसन्ति वै[18] । एते चैव ग्रहाः पूर्वं नक्षत्रेषु समुत्थिताः[19] ॥ १०
विवस्वानदितेः पुत्रः सूर्यो वै चाक्षुषेऽन्तरे । विशाखासु समुत्पन्नो ग्रहाणां प्रथमो ग्रहः ॥ १०
[illegible]षिमान्धर्मपुत्रस्तु सोमो विश्वावसुस्तथा । शीतरश्मिः समुत्पन्नः कृत्तिकासु निशाकरः ।
[illegible]शार्चिर्भृगोः पुत्रः शुक्रः सूर्यादनन्तरम् । ताराग्रहाणां प्रवरस्तिष्यक्षेत्रे समुत्थितः ॥ १०
[illegible]आङ्गिरसः पुत्रो द्वादशार्चिर्बृहस्पतिः । फल्गुनीषु समुत्पन्नः सर्वासु च जगद्गुरुः ॥ १०७

* अत्राऽऽत्मनेपदं छन्दोनुरोधात् ।

१ क. च । अथ श्या । २ ग. ङ. च । अप्यं । ३ घ. 'प्यं स्थानं म° । ४ ख. °नं पद्म । ५ ख. ङ रिचाप्यं । ६ क. ग. बुद्धस्य । ७ घ. 'र्थमुपाश्रि° । ८ ग. 'यः पौर्णि' । ९ क. ग. 'प्रतोस्त' । १० ख. ग. घ सूर्यचन्द्रमसावृतः । स° । ११ घ. 'वर्तकौ । द° । १२ ख. ङ. 'तिकौ । द° । १३ ख. ग. घ. ङ. °र्ध्वक्रमाद् । १४ ख. घ. ज्यन्ते ग° । १५ घ. ङ. 'यनक° । १६ ख. च ते देवं प° । १७ क. येषु ते' । १८ ख. ग. घ. ङ. 'ते- [illegible]व । १९ घ. मुच्छ्रिताः । २० ख. घ. ङ. °दर्शार्चि° ।

